श्रेष्ठि देवचन्द लालभाइ जैनपुस्तकोद्धारे ग्रन्थाङ्कः ८१ ।

# अनेकार्थरत्नमञ्जूषायां

श्रीसमयसुन्दरसन्दब्धाऽष्टलक्षार्थीत्यादि नाना रत्नानि ।

सम्पादकः—

सूर्यपुरवास्तव्यश्रीयुतरसिकदासतनुजः कापडियेत्युपाह्वो हीरालालः

एम्. ए. इत्युपाधिविभूषितः सभाष्यसटीकतत्त्वार्थाधिगमसूत्रादिग्रन्थानां संशोधको न्यायकुसुमाञ्जल्यादिग्रन्थानां विवेचनात्मकभाषान्तर-कर्ताऽर्हतदर्शनदीपिकायाः प्रणेता च ।

प्रकाशयित्री—

जीवनचन्द्र साकरचन्द्र जह्वेरीद्वारा

श्रेष्ठि देवचन्द् लालभाइ जैनपुस्तकोद्धारसंस्था ।

रामचन्द्र येसू शेडगेद्वारा निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्रकाशितः ।

प्रथमे संस्करणे प्रतयः १२५० ।

वैक्रमीयाब्दे १९८९ तमे ] वीरसंवति २४५९ [ ऐसवीयाब्दे १९३३ तमे

पण्यं रूप्यकत्रयम् ।

Sheth Devchand Lalbhai Jain Pustakoddhar Fund Series. No. 81

# ANEKĀRTHA-RATNA-MAÑJŪṢĀ

CONTAINING

## S'rī Samayasundara's Aṣṭalakṣārthī etc.

CRITICALLY EDITED

WITH INTRODUCTION IN SANSKRIT

BY

Prof. HIRĀLĀL RASIKDĀS KĀPADĪĀ, M. A.

POST-GRADUATE LECTURER IN ARDHAMĀGADHĪ

AT

THE BHANDARKAR ORIENTAL RESEARCH INSTITUTE, POONA.

PUBLISHED

BY

JIVANCHAND SAKERCHAND JAVERI.

FOR

SHETH DEVCHAND LALBHAI JAIN PUSTAKODDHAR FUND.

First Edition ] A. D. 1933. [ 1250 Copies

*Price Rs. 3-0-0*

# ※ સમર્પણમ્. ※

શ્રીગિરિગિરનારાદિ મહાન્ તીર્થોદ્ધારક, તપોગચ્છાલંકાર,
વિશુદ્ધચારિત્રચૂડામણિ, બાલબ્રહ્મચારી,
શ્રીમદ્

**આચાર્ય મહારાજ શ્રીવિજયનીતિસૂરીશ્વરજી,**

મુ૦ સોજત ( મારવાડ ).

પ્રાચીન ગ્રન્થ પ્રકાશનકાર્યમાં, અમૂલ્ય સહાયતા આપ-
શ્રી તરફથી મળતી રહી છે તેની યત્કિંચિત્
એધાણી તરીકે આ ગ્રન્થરત્ન આપશ્રીની
અનુમતિ વિના આપના કરકમલમાં
સમર્પી અંશતઃ કૃતાર્થ થવા
અભિલાષા રાખીયે
છિયે.

ગોપીપુરા, સુરત.
સં. ૧૯૮૯, વૈશાખી પૂર્ણિમા,
મે સને ૧૯૩૩.

**જીવણચંદ સાકરચંદ જવેરી**
અને
**અન્ય માનદ મંત્રીઓ.**

# THE LATE
# SHETH DEVCHAND LALBHAI JAVERI.

BORN 1853 A.D. SURAT — DIED 13TH JANUARY 1906 A.D. BOMBAY

## श्रेष्ठी देवचन्द्र लालभाई जहवेरी.

| जन्म १९ .. विक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां देवप्रबोधिनीदिने<br>सूरतपुरे | निर्याणम् १९६२ विक्रमाब्दे<br>पौषकृष्णतृतीयायाम् मकरसंक्रान्तिदिने<br>मोहमयीनगर्याम्. |
|---|---|

A. 8106 Lakshmi Art, Bombay 8

श्रीपार्श्वशांतिम्.

# આમુખ.

શેઠ દેવચંદ લાલભાઇ જૈનપુસ્તકોદ્ધારે ગ્રંથાંક ૮૧ મા તરીકે (૧) ઉપાધ્યાય શ્રીસમય-સુન્દરગણિકૃત **અષ્ટલક્ષાર્થી** અપર નામ **અર્થરત્નાવલી**, (૨) **શ્રીશુભતિલકકૃત ગાયત્રી-વિવરણ**, (૩) મહામંત્રાધિરાજ નવકારના **"नमो अरिहंताणं"** પદના ૧૧૦ અર્થો વગેરે અમૂલ્ય કૃતિઓને અત્ર **અનેકાર્થરત્નમંજૂષા** નામથી એકત્ર પ્રસિદ્ધ કરતાં અમને વિશેષ આનંદ થાય છે; કેમકે આવી અનેક અર્થવાળી વિવિધ કૃતિઓ પ્રસિદ્ધિમાં લાવવાનો યોગ અમોને પ્રથમ પ્રાપ્ત થયો છે. પૃષ્ઠ ૧ થી ૨૪ માં સટીક નમસ્કારસૂત્ર અને ઉવસગ્ગહરસ્તોત્ર પણ જોડવામાં આવ્યાં છે.

પ્રોફેસર હીરાલાલ રસિકદાસ કાપડિયા M. A દ્વારા આ ગ્રંથનું સંશોધન કરાવવામાં આવ્યું છે અને તેમને આને અંગે જરૂરી પ્રસ્તાવના વગેરે સર્વ આલેખ્યું હોવાથી અમારે તત્સંબંધે વિશેષ કાંઇ કહેવાપણું રહેતું નથી.

જે જે મુનિવર્યોએ અને ભંડારોના સંચાલકોએ પ્રતો આપવા મહેરબાની કરી છે તથા પ્રકાશનકાર્યમાં જેમણે સહાયતા આપી છે તે સર્વેના અમો ઋણી છિયે.

ગ્રન્થ બહાર પડતાં અતિશય વિલંબ થવાથી વાચકોની ક્ષમા યાચિયે છિયે.

| | |
|---|---|
| ગોપીપુરા,<br>સુરત.<br>સં. ૧૯૮૯ વૈશાખી પૂર્ણિમા,<br>મે સને ૧૯૩૩. | લિ૦<br>જીવણચંદ સાકરચંદ જવેરી,<br>પોતે અને બીજા ટ્રસ્ટીઓ માટે. |

# अनेकार्थरत्नमञ्जूषाया विषयानुक्रमणिका.


| | | |
|---|---|---|
| १ | स्मरणपत्रिका ( गौर्जरगिरि ) | ५ |
| २ | आमुखम् ( गौर्जरगिरि ) | ७ |
| ३ | प्रस्तावना | ९–२० |
| ४ | अर्थरत्नावली ( अष्टलक्षार्थीत्यपराह्वया ) | १–७० |
| ५ | गायत्रीविवरणम् | ७१–८२ |
| ६ | हरिशब्दार्थगर्भितः श्रीवीतरागस्तवः | ८३ |
| ७ | सारङ्गशब्दार्थसङ्कलिता श्रीऋषभजिनस्तुतिः | ८४–८५ |
| ८ | 'सारङ्ग'शब्दषष्ठ्यर्थमयः श्रीमहावीरजिनस्तवः | ८५–८६ |
| ९ | 'पराग'शब्दाष्टोत्तरशतार्थनिबद्धं साधारणजिनस्तवनम् | ८७–९० |
| १० | 'सवत्थ'शब्दार्थसमुच्चयः | ९१–९८ |
| ११ | 'परवाया'शब्दार्थनिरूपणम् | ९९–१०२ |
| १२ | नमस्कारप्रथमपदार्थाः | १०३–११८ |
| १३ | एकाक्षरनाममाला | ११९–१२२ |
| १४ | एकाक्षरनाममालिका | १२३–१२७ |
| १५ | पउमामेत्यादिगाथाया अनुयोगचतुष्टयव्याख्या | १२७–१३३ |
| १६ | गोशब्दकाव्यम् | १३४ |
| १७ | नमस्कारसूत्रं सटीकम् | १–६ |
| १८ | उवसग्गहरस्तोत्रं टीकायुगलालङ्कृतम् | ७–२४ |

# प्रस्तावना

"सिद्धं सिद्धत्थाणं ठाणमणोवमसुहं उवगयाणं ।
कुसमयविसासणं सासणं जिणाणं भवजिणाणं ॥ १ ॥"

—सन्मतिप्रकरणे

अनेकार्थरत्नमञ्जूषाभिधस्यास्य कृतिकलापस्य प्रस्तावनाप्रणयने नाहमलम्, यथेष्टसाधनाभावात् । तथापि प्रास्ताविकं किञ्चिल्लिख्यते । तावत् प्रस्तूयतेऽनेकार्थसाहित्यगवेषणा—

अनेकार्थसाहित्यविषयका आर्हतविबुधवरविरचिता नाना ग्रन्था दरीदृश्यन्ते । तत्र विषयानुक्रमणिकागतान् विहाय श्वेताम्बरीयाणां कतिपयानां नामोल्लेखः क्रियते । यथाहि—

(१) कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिप्रणीतं [1]प्राकृतद्व्याश्रयकाव्यम् ।
(२) एतत्सूरिसन्दब्धं [2]संस्कृतद्व्याश्रयकाव्यम् ।
(३) एतत्सूरिसूत्रितं [3]सप्तसन्धानमहाकाव्यम् ।
(४) महोपाध्यायश्रीमेघविजयविरचितं [4]सप्तसन्धानमहाकाव्यम् ।
(५) श्रीहेमचन्द्रसूरिविनेयश्रीवर्धमानगणिगुम्फितं [5]कुमारविहारप्रशस्तिमहाकाव्यम् ।

---

१-२ पुण्यपत्तनस्थप्राच्यविद्यासंशोधनमन्दिरात् प्रसिद्धिं नीतमिदं प्रत्येकम् ।

३ महोपाध्यायश्रीमेघविजयैः सप्तसन्धानमहाकाव्यनाम्न्या निजकृतेः प्रारम्भे समसूचि, परन्तु तद् विनष्टमेतन्महोपाध्यायसमयपूर्वमिति ज्ञायते सप्तसन्धानगतेन प्रारम्भिकेन पद्येन ।

४ इदं मुद्रापितं समस्ति ।

५ एतत्प्रारम्भ उल्लेखोऽयम्—

"श्रीहेमचन्द्रसूरिशिष्येण वर्धमानगणिना कुमारविहारप्रशस्तौ काव्येऽमुष्मिन् पूर्वं षडर्थे कृतेऽपि कौतुकात् षोडशोत्तरं व्याख्यानं चक्रे । तत्र प्रशस्तौ सप्ताशीतितमं वृत्तम् । तच्चेदम्—

'गम्भीरः श्रुतिभिः सदाचरणतः प्राप्तः प्रतिष्ठोदयः
सत्कान्तारचितप्रियो बहुगुणो यः साम्यमालम्बते ।
श्रीचौलुक्यनरेश्वरेण विबुधश्रीहेमचन्द्रेण च
श्रीमद्वाग्भटमन्त्रिणा च परिवादिन्या च मन्त्रेण च' ॥"

अस्य पद्यस्य ११६ अर्थाः । प्रणतनृपा-ऽप्रणतनृप-ब्रह्म-विष्णु-महेश-परब्रह्म-धनपति-क्षेत्रपाल-धनदा-ऽर-कृतयुग-विष्णुचक्रा-ऽनिरुद्ध-वागुरिक-पल्लीपति-चकोर-नागराज-सुरपति-वैश्वानर-कृतान्त-राक्षस-वायु-कमठ-पाताल-मर्त्यलोक-सुरलोक-वरुण-धनुर्धर-सज्जन-दुर्जन-कुमारपाल-राजहंस-पण्डित-मूर्ख-लक्ष्मी-हेमगुण-चन्द्र-कर्पूर-देव-सूर्य-हेमचन्द्रसूरि-मङ्गल-बुध-बृहस्पति-शुक्र-शनैश्चर-राहु-केतु-शङ्करशीर्षगतचन्द्र-महेशहास्य-महादेवभस्म-दानव-नर-लक्ष्मीवाचक-सुवर्णशशि-याचक-निष्काम-धर्मा-ऽर्थ-काम-मोक्ष-सरस्वती-वाक्-सुभट-मन्त्रवादि-पथिक-भ्रमर-सर्पिणी-व्यभिचारिणी-पण्डिता-सुभग-वात्स्यायन-भौतिकतापस-गौरीवर-स्तनतट-चन्द्रकिरण-चारित्रप्राप्तधन-उल्का-मुख-शुक-कामि-सर्पदष्ट-कामिनी-सामन्त-मांसाहार-कृपालु-रत्नपरीक्षका-ऽऽङ्गण-मङ्गलकान्ति-निधिकलश-जलचर-देवाकृति-वणिग्-जिनप्रतिमा-ऽर्हद्भक्त-स्याद्वादवादि-पौरुष-विनायक-हस्तिनायक-पर्वतगुहा-जिन-समवसरण-ज्ञान-दर्शन-चारित्र-यति-वाग्भट-जैनसिद्धान्त-गतिसिद्ध-वेश्यासक्त-जिनेश्वर-जिनस्तुतिकारक-वृषभदेव-भरतचक्रि-चरमजिन-पार्श्वजिनेति विषयाः ।

(६) श्रीजिनप्रभसूरिसूत्रितं कातन्त्रव्याकरणविशदीकारि 'मगध'नरेश्वरश्रेणिकजीवनचरित्रात्मकं द्व्याश्रयमहाकाव्यम्।[1]

(७) श्रीविजयसिंहसूरिशिष्यश्रीसोमप्रभसूरिकृतं शतार्थवृत्तम्[2][3]।

(८) श्रीलावण्यधर्मशिष्यश्रीउदयधर्मगणिप्रणीता 'दोससय'[4]गाथाशतार्थी।[5]

५ (९) श्रीबुद्धिसागरशिष्यश्रीमानसागरमुनिकृता परिग्रहेतिपद्य[6]शतार्थी।[7][8]

(१०) श्रीजयसुन्दरसूरिसूत्रिता प्राप्तुं[9] पारेत्यादिशतार्थी।[10]

---

१ एतस्य कतिपयो विभागो मुद्रापितः। अस्य प्रणेतृभिर्बहवो ग्रन्था विरचिताः। एतन्नामजिज्ञासुभिर्विलोक्यतां श्रीचतुर्विंशतिजिनानन्दस्तुतेर्मदीया भूमिका (पृ. ४०-४२)। रहस्यकल्पद्रुमोऽप्येतेषां कृतिर्वर्तते। प्रेक्ष्यतां १३०तमं पृष्ठम्।

२ एतत् काव्यमित्थम्—

"कल्याणसारसवितानहरेक्षमोह—कान्तारवारणसमानजयाद्यदेव।
धर्मार्थकामद महोदय वीरधीर, सोमप्रभाव परमागम सिद्धसूरे॥"

अस्य चतुर्विंशतिजिनेश्वर-पञ्चपरमेष्ठि-पञ्चमहाव्रत-चतुःपुरुषार्थ-नवग्रह-दशदिक्पालेत्यादिसम्बन्धिनः १०२ अर्थाः। किञ्चास्य विवरणकर्तार एतत्काव्यप्रणेतार एव। उक्तं च–

"यो गृह्णाति समुच्छ्रुतं वहति यस्तर्केऽद्भुतं पाटवं
काव्यं यस्त्वरितं करोति तनुते यः पावनीं देशनाम्।
योऽबध्नात् सुमतेश्चरित्रमदभ्रद् यः सूक्तपङ्क्तिं परां
श्रीसोमप्रभसूरिरेष विशदं वृत्तं शतार्थं व्यधात्॥"

३ अद्यावध्यस्य स्वोपज्ञविवरणममुद्रापितं वर्तते।

४ श्रीधर्मदासगणिगुम्फिताया उपदेशमालाया एकपञ्चाशत्तमा गाथेयम्। यथाहि–

"दोससयमूलजालं पुव्वरिसिविवज्जिअं जईवंतं। अत्थं वहसि अणत्थं कीस अणत्थं तवं चरसि?॥ ५१॥"

पञ्चपरमेष्ठि-षट्कायरक्षा-ऽष्टप्रवचनमातृ-दशयतिधर्म-गणधरादीनाश्रित्यास्याः १०१ अर्थाः कृताः।

५ अस्य शतार्थी श्रीसोमप्रभसूरिभिरपि निर्मितेत्यनुमीयते सहस्रावधानिश्रीमुनिसुन्दरसूरिसूत्रितोपदेशरत्नाकर(द्वितीयांशचतुर्दशतरङ्ग)गतेन निम्नावतारितेनोल्लेखेन–

"विश्वश्राद्धप्रभित "दोससय०" इति गाथाशततमार्थव्याख्यावसरप्रतिबुद्धकरमुद्रिकादित्यागिशतार्थीतिख्यातिभृच्छ्रीसोमप्रभसूरयः प्रमादावस्थायाम्।" ग्रन्थोऽयं नाद्यावधि मुद्रितः।

६ समग्रं पद्यं योगशास्त्रे (प्र. २) विद्यते, यथा—

"परिग्रहारम्भमग्नास्तारयेयुः कथं परान्?। स्वयं दरिद्रो न परमीश्वरीकर्तुमीश्वरः॥ १०॥"

७ एतदनुलक्ष्य विवरणकारैः प्रोक्तम्—

"प्राचीनार्वाचीनाचार्यचक्रवर्तिभिः श्रीमत्तपागच्छाधिराजैर्महामहीपतिवितीर्णविस्तीर्णसन्मानैः श्रीहीरविजयसूरिभिः शतार्थपरीक्षाकृते समर्पितस्य श्रीयोगशास्त्रद्वितीयप्रकाशस्य द्वादशस्य (? दशमस्य) श्लोकस्य शतार्थी क्रियते।"

चतुर्विंशतितीर्थङ्कर-पञ्चपरमेष्ठि-ब्रह्म-विष्णु-दशदिक्पाल-चतुर्दशस्वप्नादिसम्बन्धिनः १०६ अर्था अत्र दृष्टिपथमवतरन्ति।

८ इयं शतार्थी नाद्यापि मुद्रिता।

९ योगशास्त्रस्य द्वितीयप्रकाशगतं ८५तमपद्यस्याद्यं चरणमिदम्। सम्पूर्णं पद्यं तु यथा—

"प्राप्तुं पारमपारस्य, पारावारस्य पार्यते। स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः॥ ८५॥"

१० इयं शतार्थी नाद्यावधि मे दृष्टिपथमागता। अस्याः सत्ताऽपि सम्भवप्राया।

(११) रत्नाकरावतारिकाद्यपद्यशतार्थी।
(१२) श्रीलाभविजयगणिप्रणीता नमो दुर्वारेत्यादिपद्यस्य पञ्चशतार्थी।[2]
(१३) श्रीहर्षकुलगणिविरचिता शतार्थी।[4]
(१४) श्रीबप्पभट्टिसूरिनिर्मिता 'तत्तीसिया'दिगाथाया अष्टोत्तरशतार्थी।[5]
(१५) श्रीहंसप्रमोदगणिकृताऽनेकार्थमयी सारङ्गसारवृत्तिः।[6] ५
(१६) श्रीभावप्रभसूरिकृतं मदनादरविवरणम्।
(१७) महोपाध्यायश्रीविनयविजयकृता 'चत्तारिअट्ठ'व्याख्या।
(१८) श्रीदेवेन्द्रसूरिकृता ,,
(१९) श्रीसोमतिलकसूरिविनिर्मिता साधारणस्तुतिः स्वोपज्ञवृत्तिविभूषिता।[11]
(२०) एतत्सूरिप्रणीतं सर्वज्ञस्तोत्रं विविधार्थालङ्कृतं 'सदानवसुराजितं'चतुर्थचरणात्मकम्।[12] १०
(२१) श्रीलक्ष्मीसागरसूरिशिष्यमहोपाध्यायश्रीचारित्ररत्नगणिप्रणीते एकोनत्रिंशत्पद्या-

---

१ प्रेक्ष्यतां जैनग्रन्थावली (पृ. ७८)।

२ योगशास्त्रस्यादिमं पद्यमिदम्। तथाहि—

"नमो दुर्वाररागादि-वैरिवारनिवारिणे। अर्हते योगिनाथाय महावीराय तायिने॥ १॥"

३ अस्या अस्तित्वं तपागच्छीयपट्टावल्यनुसारेण ज्ञेयम्। न चेयं मे नयनगोचरतां गता।

४ "तेषां रा(प्रा?)ज्ये राज्ये, विबुधा निर्मलशतार्थविरुदभृतः। श्रीहर्षकुलगणीन्द्रा, विबुधावतंसा बभूवुर्ये॥४॥"

इति श्रीविजयविमलगणिकृतबन्धहेतूदयत्रिभङ्गीप्रकरणटीकाप्रारम्भिकपद्येनानुमीयते यदुतैभिः काऽपि शतार्थी निरमायि।

५ केवलमर्थचतुष्टयं समसूचि श्रीप्रभाचन्द्रसूरिभिर्निजकृतौ प्रभावकचरिताह्वयायां (पृ. १४४-१४५)।

६ सम्पूर्णं पद्यमेवम्—

"सारङ्गसारकमलादरसोमकान्त-देवागमामृतविभाजनधीरभूते।
वामोपकार भरताधिप राजमान-वर्णास बन्धुरशिवाज हरेक्षभाव॥"

७ एतत्प्रारम्भिक उल्लेख एवम्—

"नमस्कृत्य कृतानन्दं, कन्दं सौभाग्यशालिनः। वीरं बह्वर्थवृत्तस्य, वृत्तिं कुर्वे यथामति॥ १॥"

अन्ते पद्यं यथा—

"दोर्गुहास्यगुहास्यैक(१६६२)मिते वर्षे कृता अमी। अर्थाः सद्दादि सप्तम्यां, पार्श्वनाथप्रसादतः॥"

८ एतदर्थं प्रेक्ष्यतां श्रीभावप्रभसूरिकृतस्य श्रीनेमिभक्तामरस्य नवमस्य पद्यस्य स्वोपज्ञवृत्तेर्मदीयावृत्तेः १११तमात् ११३तमपर्यन्तानि पृष्ठानि।

९ एतद्गाथाया अन्येऽन्येऽर्थाः प्रतिपादिताश्चैत्यपरिपाटीस्तवने। एतदर्थं विलोक्यतां श्रीभावप्रभसूरिकृतिकलापाख्या मदीयाऽऽवृत्तिः (पृ. १३९-१४३)।

१० एतज्जिज्ञासुभिः प्रेक्ष्यतामुपर्युक्ताऽऽवृत्तिः (पृ. १४३-१४६)।

११ अन्यकर्तृकावचूरिसमेता सम्पादितेयं मया। एतद्दिदृक्षुभिः प्रेक्ष्यतां श्रीमेरुविजयगणिकृतश्रीचतुर्विंशतिजिनानन्दस्तुतेर्मदीयाऽऽवृत्तिः (पृ. २१५-२१८)।

१२ मदीयानुवादपूर्वकं समस्तीदं स्तुतिचतुर्विंशतिकाभिधे ग्रन्थे (पृ. १६८-१७०)।

त्मके श्रीयुगादिजिनस्तवने प्रथमान्तिमे पद्ये विहाय नानाऽर्थवाचिप्रतिपद'सरस्वती'समलङ्कृतानि पद्यानि ।

(२२) श्रीभावप्रभसूरिसूत्रिता गुंहलिका( गोधूलिका )पदनानाऽर्थाः ।[२]

(२३) श्रीसोमतिलकसूरिकृतं श्रीसिद्धार्थनरेन्द्रादिश्रीवीरजिनस्तवनम् ।[३]

(२४) श्रीरत्नशेखरसूत्रितं नवखण्डपार्श्वजिनस्तवनम् ।[४]

(२५) ,, श्रीवामेयस्तवनं नवग्रहस्तवगर्भम् ।[५]

(२६) ,, श्रीपार्श्वजिनस्तवः ।[६]

(२७) प्रतिपद'शर्म'शब्दसङ्कलितं श्रीपार्श्वनाथस्तोत्रम् ।

(२८) श्रीगुणविजयगुम्फितः प्रतिपद'सारङ्ग'समलङ्कृतः श्रीमहावीरजिनस्तवः ।[७]

(२९) 'महावीर'पदविभूषितं पद्याष्टकमितं च श्रीमहावीरजिनस्तोत्रम् ।

(३०) श्रीनयचन्द्रसूरिप्रणीतं पद्यदशकात्मकं श्रीस्तम्भनपार्श्वनाथस्तवनम् ।

## श्रीसमयसुन्दरगणीनां कृतिततिः

| ग्रन्थनाम | ग्रन्थमानम् | रचनासंवत् |
| --- | --- | --- |
| भावशतकम् | १०१ | १६४१ |
| अर्थरत्नावली ( अष्टलक्षार्थी ) | | १६४६ |
| साम्बप्रद्युम्नचोपाइ ( गू. ) | | १६५९ |
| करकंडुचोपाइ ( गू. ) | | १६६२ |

१ अस्य द्वितीयं पद्यमवतारितं मया श्रीशोभनस्तुतिभूमिकायां ( पृ. १० ) । आद्यं तु यथा—

"सदा चिदानन्दनिदानमद्वयं, जगत्त्रयीत्राणधुरीणपद्द्वयम् ।
सरस्वतीतुष्टिकृते सरस्वती-पदार्थसार्थैः प्रथमं जिनं स्तुवे ॥ १ ॥"

२ समीक्ष्यतां श्रीभावप्रभसूरिकृतिकलापाख्या मदीयाऽऽवृत्तिः ( पृ. १२९–१३४ ) ।

३ अस्याग्रिमं पद्यं वरीवर्ति श्रीशोभनस्तुतेर्मदीयायां भूमिकायां ( पृ. २६ ), समग्रं तु सावचूरिकं जैनस्तोत्रसमुच्चये ( पृ. ७६–८१ ) ।

४ अस्याद्यं पद्यं श्रीशोभनस्तुतेर्भूमिकायां मयाऽवतारितम् । समस्तं स्तवनं तु सावचूरि समस्ति जैनस्तोत्रसमुच्चये ( पृ. ६९–७० ) ।

५ प्रेक्ष्यतां जैनस्तोत्रसमुच्चयः ( पृ. ७१–७२ ) । ६ अवलोक्यतां जैनस्तोत्रसमुच्चयः ( पृ. ७३ ) ।

७ समीक्ष्यतां जैनस्तोत्रसङ्ग्रहस्य द्वितीयो विभागः ( पृ. १३१–१३३ ) ।

८ अस्य स्तवनस्य चतुर्थादिसप्तमान्तेषु पद्येषु प्रतिपदं हरिपदं समस्ति । समग्रतः चतुर्दश अर्था द्योतिता अत्र ।

| ग्रन्थनाम | ग्रन्थमानम् | रचनासंवत् |
|---|---|---|
| [1]दान-शील-तप-भावनासंवाद (गू.) | | १६६२ |
| [2]रूपकमालाऽवचूर्णिः | ४०० | १६६३ |
| चारप्रत्येकबुद्धरास (गू.) | | १६६५ |
| [3]चातुर्मासिकव्याख्यानम् | | ,, |
| [4]कालिकाचार्यकथा | | १६६६ |
| श्रावकाराधनाविधिः | | १६६७ |
| शीलछत्रीसी (गू.) | | १६६९ |
| सन्तोषछत्रीसी (गू.) | | ,, |
| प्रियमेलकरास (गू.) | | १६७२ |
| [5]सामाचारीशतकम् | | ,, |
| [6]विशेषशतकम् | | ,, |

१ लींबडीभाण्डागारसत्कायां प्रत्यां प्रशस्तिरियम्—

"सोलसइ बासठि ( १६६२ ) समइ रे 'सांगा' नगर (?) मझारि।
पद्मप्रभ सुपसाउ लइ रे एह भण्यउ अधिकारे रे ॥ ६ ॥

सोहम सांपि परंपरा रे 'खरतर' गच्छ कुलचंद। युगप्रधान जगि परगडा रे श्रीजिनचन्द्र सूरिंदो रे ॥ ७ ॥
तासु सीस अति दीपतो रे विनयवंत जसवंत। आचारिज चडती कला रे श्रीजिनसिंहसूरि महंतो रे ॥ ८ ॥
प्रथम श(शि)ष्य श्रीपूजनो रे सकलचन्द तसु सीस। समयसुन्दर वाचक भणि रे संघ सदासुं जगीस रे ॥९॥
दान शील तप भावनो रे सरस रचिउ संवाद। भणतां गुणतां भावसुं रे रिद्धि समृद्धि सुप्रसादो रे ॥ १० ॥"

२ इयं समशोधि श्रीसमयसुन्दरगणिप्रगुरुश्रीजिनचन्द्रसूरिशिष्यश्रीरत्ननिधानगणिभिः।

३ चुनीजीभाण्डागारसत्कसप्तपत्रात्मिकायाश्चातुर्मासिकव्याख्यानप्रत्याः प्रान्ते—
"श्रीसमयसुन्दरोपाध्यायविरचितचतुर्मासिकव्याख्यानं समाप्तम्।"

४ वाराणसीस्थयतिश्रीबालचन्द्रभाण्डागारसत्ककालकसूरिकथाप्रतिप्रान्ते उल्लेखो यथा—

"श्रीमद्विक्रमसंवति रसर्तुशृङ्गार( १६६६ )सङ्ख्यके सहसि।
श्री'वीरमपुर'नगरे श्रीराउलतेजसीराज्ये ॥ १ ॥

बृहत्खरतरे गच्छे, युगप्रधानसूरयः। जिनचन्द्रा जिनसिंहाश्च, विजयन्ते गणाधिपाः ॥ २ ॥
तच्छिष्यः सकलचन्द्रः, शिष्यः समयसुन्दरः। कथां कालिकसूरीणां, चक्रे बालावबोधिकाम् ॥ ३ ॥"

५ 'मेडता'नगरे रचितमिदम्।

६ श्रीविजयधर्मलक्ष्मीज्ञानभाण्डागारसत्कप्रतिप्रान्तेऽयमुल्लेखः—

"श्रीमत्'खरतर'गच्छे श्रीमज्जिनसिंहसूरिगुरुराज्ये। साम्राज्यं कुर्वाणे युगप्रधानाख्यबिरुदधरे ॥ १ ॥
विक्रमसंवति लोचनमुनिदर्शनकुमुदबान्धव( १६७२ )प्रमिते।
श्रीपार्श्वजन्मदिवसे ( पौषकृष्णदशम्यां ) पुरे श्री'मेडता'नगरे ॥ २ ॥

| ग्रन्थनाम | रचनासंवत् |
|---|---|
| नलदवदंतीचोपाइ ( गू. ) | १६७३ |
| पुण्यसारचरित्र ( गू. ) | ,, |
| [2]विचारशतकम् | १६७४ |
| ५ वल्कलचीरीचोपाइ ( गू. ) | १६८१ |
| वस्तुपालतेजपालरास ( गू. ) | १६८२ |
| [3]शत्रुंजयरास ( गू. ) | ,, |
| बारव्रतरास ( गू. ) | १६८५ |

---

युगप्रधानपदवी, श्रीअकब्बरशाहिना । येभ्यो दत्ता महाभाग्याः, श्रीजिनचन्द्रसूरयः ॥ ३ ॥
तेषां शिष्यो मुख्यं(ख्यः) स्वहस्तदीक्षश्च सकलचन्द्रगणिः ।
तच्छिष्यसमयसुन्दरसुपाठकैरकृत शतकमिदम् ॥ ४ ॥

संवत् १७२७ वर्षे श्रावणवदि ३ दिने शनिवारे श्रीगुडामध्ये ॥ पं० कल्याणनिधानमुनीनां (? नामन्ते)-वासिना पं० लब्धिचन्द्रमुनि(ना) लिपीचक्रे ।"

गाथासहस्र्यां निरदेशि ग्रन्थोऽयं श्रीसमयसुन्दरगणिभिः ।

१ "सुधरम सामि परंपरा 'चंद' कुल 'वयर' सामि साषि, 'कौटक' गच्छ खरतरउ भट्टारकिया सुभाषि सुभाष जुगपरधान जिनचंद प्रथम शिष्यशिरोमणी, जसु गोत्र 'रीहड' नाम पंडित सकलचंद प्रसिद्ध घणी तसु शिष्य पभणइ समयसुन्दर उपाध्याय इसी परइं, वाचनाचार्य हर्षनन्दन प्रमुष सिष्यनइं आदरइं १ गोत्र 'गलोछा' गहगहइ 'मेडता' नयर मझारि, दिन दिन संघ माहि दीपता 'खरतर' गच्छ सिणगार सिणगार धर्म तणा धुरंधर देवगुरुरागी घणउ, रायमल्ल पुत्ररत्न अमीपाल षे(खे)तसी नेतसी भणुं राजसी तासु भत्रीज तिहां किण नेतसी आग्रह करी, चौपइ कीधी समयसुंदर नलदवदंती चरित्तरी संवत सोल तिहोत्तरइ ( १६७३ ) मास वसंत आणंद, नगर मनोहर 'मेडतइ' जिहां वासपूज्य जिणंद वासपूज्य तीर्थंकर प्रसाद(इ) गच्छ 'खरतर' गहगहइ, गच्छराय युगपरधान जिनसंघसूरि सदा जस लहइ उवझाय कहइ समयसुंदर कीयउ आग्रह नेतसी, चोपइ नलदवदंती केरी चतुर माणस चित्त वसी संवत् १७९७ वर्षे कार्तिक शुक्ल १० रविवासरे सयणाग्रामे" ।

२ चुनीजीभाण्डागारसत्कविचारशतकप्रतिप्रान्ते प्रशस्तिरेवम्—

"स्वच्छे 'खरतर'गच्छे विजयिनि जिनसिंहसूरिगुरुराजे ।
वेदमुनिदर्शनेन्दु( १६७४ )प्रमितेऽब्दे 'मेडता'नगरे ॥ १ ॥

श्रीजिनचन्द्रमुनीन्द्रास्तच्छिष्यः सकलचन्द्रगणिरासीत् । तच्छिष्यसमयसुन्दरनामानः पाठकप्रवराः ॥ २ ॥
शीघ्रं स्मृतिकृते स्वस्य, विचारशतकं व्यधुः । पृथक् स्थितविचाराणा–मेवमेकत्र मीलनात् ॥ ३ ॥"

३ "संवत सोलसइ ब्यासीयइ ( १६८२ ) ए श्रावण वदि सुखकार से०
रास भण्यउ 'सेत्रुंज' तणउ ए नगर 'नागोर' मझार से० १९
गिरुयऊ गच्छ 'खरतर' तणऊ ए श्रीजिणचंदसूरीस से०,
प्रथम शिष्य श्रीपूज्यना ए सकलचंद सुसीस से० २०
तासु सीस जगि परगडा ए समयसुंदर उवझाय से०,
ए रास रच्यउ तिण रुयडउ ए सुणतां आणंद थाय से० २१"

| ग्रन्थनाम | ग्रन्थमानम् | रचनासंवत् |
| --- | --- | --- |
| [1]विशेषसङ्ग्रहः | | १६८५ |
| विसंवादशतकम् | | ,, |
| गौतमपृच्छारास ( गू. ) | | १६८६ |
| गाथासहस्री ( प्रा. ) | | ,, |
| [2]जयतिहुयणवृत्तिः | | १६८७ |
| नवतत्त्ववृत्तिः | | १६८८ |
| [3]मृगावतीचोपाइ ( गू. ) | | ,, |
| दशवैकालिकवृत्तिः | ३३५० | १६९१ |
| [4]थावच्चाचोपाइ ( गू. ) | | ,, |
| व्यवहारशुद्धिचोपाइ ( गू. ) | | १६९३ |

---

१ "स्वच्छे 'खरतर'गच्छे 'चान्द्र'कुले 'वज्र'नामशाखायाम् ।
भट्टारकजिनचन्द्रा युगप्रधानाख्यबिरुदधराः ॥ १ ॥
तेषां शिष्या 'रीहड'गोत्रीयाः सकलचन्द्रगणिमणयः । तच्छिष्यसमयसुन्दरनामानः पाठकप्रवराः ॥ २ ॥
तैः शिष्याविहितार्थं ग्रन्थोऽयं ग्रथितः प्रयत्नेन। नाम्ना विशेषसङ्ग्रह इषुवसुशृङ्गार( १६८५ )मितवर्षे ॥ ३ ॥
राज्ये श्रीजिनराजसूरिसुगुरोर्बुध्या जितस्वर्गुरो-राचार्ये जिनसागरे सुखकरे सौभाग्यभाग्याधिके ।
ग्रङ्गं(ङ्के) श्रीमति 'लूणकर्णसरसि' श्रीसङ्घदीप्तोदये, ग्रन्थोऽयं परिपूर्णतामलभत श्रीफाल्गुने मासि च ॥४॥"

२ "श्रीमत्'खरतर'गच्छे जिनसागरसूरिराजसाम्राज्ये ।
'अणहिलपत्तन'नगरे संवति मुन्यष्टशृङ्गारे ( १६८७ )ः ॥ १ ॥
श्रीसमयसुन्दराख्याः पाठकविदुरा इमां व्यधुर्वृत्तिम् ।
मुनिसहजविमलपण्डितमेघविजयशिष्यपठनार्थम् ॥ २ ॥"

३ श्रीविजयधर्मलक्ष्मीज्ञानभाण्डागारसत्कायां प्रत्यामुल्लेख एवम्—
"श्री'खरतर'गच्छकमलदिणिंदा युगप्रधान जिनचंदा बे । मृ०
श्रीजिनसिंघसूरि सोभागी पुण्य दिसा जसु जागी बे । मृ० २३
प्रथम शिष्य श्रीपूज्य केरा सकलचंद गुरु मेरा बे मृ०
तसु प्रसादि थया ग्रंथ पूर(ण) प्रगट्या सुजस पडूरा बे मृ० २५
सोलसइ अठसठया ( १६८८ ) वरषे हुई चउपई घणो हरषे बे २६
मृगावतीचरित्र कह्या त्रिहुं खंडे पणे आणंद घमंडे बेबे ॥ २७ ॥
समयसुंदर थइ संघ आसीसी रिद्धि वृद्धि सुजगीसा बे २९ मृ०
संवत् १६९० वर्षे अश्वनि शुदि ३ दिने बृहस्पति वार ॥ श्री'षरतर'गच्छे ॥ श्रीपूज्य श्री ५ जिनसिंघसूरि ॥ पं० श्रीलब्धिवर्धनमुनि । तत् शिष्यक्ष (?) । वा० श्रीषोषारिषि उपाध्याय श्री ५ शिवचंद्र तत्शिक्ष (?) मानकीर्तिलिखितं ।"

४ पुण्यपत्तनस्थप्राच्यविद्यासंशोधनमन्दिरसत्कथावच्चाचोपइप्रतिप्रान्ते—
"संवत् सोल एकाणुं वरषै काती वदि त्रीज हरषें बे
श्री'षंभाइत' खारवा वाडइं चौमासि रह्या सुदिहाडे बे से० २०
'षरतर' गच्छ जिणचंदसूरीसा सकलचंद तसु सीसा बे
समयसुंदर तसु सीसे प्रसिद्धा शिष्य प्रशिष्य समृद्धा बे ॥ २१ ॥"

| ग्रन्थनाम | रचनासंवत् |
|---|---|
| वृत्तरत्नाकरवृत्तिः[1] | १६९४ |
| चंपकचोपाइ ( गू. )[2] | १६९५ |
| अर्थलापनिका ( रघुवंशटीका )[3] | ,, |
| ५ कल्याणमन्दिरस्तोत्रटीका[4] | ,, |
| पुंजराजऋषिरास | १६९८ |
| आलोयणाछत्रीसी | ,, |
| द्रौपदीसतीसम्बन्ध ( गू. ) | १७०० |
| कल्पलता ( कल्पसूत्रटीका )[5] | |

---

१ वाराणसीनयाघाटस्थचुनीजीभाण्डागारसत्कवृत्तरत्नाकरटीकाप्रतिप्रान्ते प्रशस्तिरियम्—

वृत्तरत्नाकरे वृत्तिं, गणिं(णि:) समयसुन्दरः । षष्ठाध्यायस्य सम्बन्धां(न्धं), पूर्णीचक्रे प्रयत्नतः ॥ १ ॥

संवति विधिमुख-निधि-रस-शशि( १६९४ )सङ्ख्ये द(दी)पपर्वदिवसे च ।

'जालोर'नामनगरे लूणेयाकसत्कार्पितस्थाने ॥ २ ॥

श्रीमत्'खरतर'गच्छे श्रीजिनचन्द्रसूरयः । तेषां सकलचन्द्राख्यौ(ख्यो) विनेयः प्रथमोऽभवे(व)त् ॥ ३ ॥

तच्छि(च्छि)ष्यसमयसुन्दर एतां वृत्तिं चकार सुगमतराम् । श्रीजिनसागरसूरिं(रि)प्रवरे गच्छाधिराजेति ४

यः कोऽपि मत्सरी मूढः प्रशस्तिं न लिखिष्यति । स लोके लप्स्यते निन्दां, कुणिर्भावी परत्र च ॥ ५ ॥"

मुनिवर्यश्रीहंसविजयसत्कप्रत्यां पञ्चमं पद्यं न वर्तते ।

२ "संवत सोल पंचाणूंयइ मइ 'जालोर'मांहे जोडी रे

चंपकशेठनी चउपई अंगि आलस मइ उंघ छोडी रे १५ के०

श्री'खरतर'गच्छ राजीयो श्रीयुगप्रधान जिनचंदो रे प्रथम शिष्य श्रीपूज्यना श्रीसकलचंद मुणिंदोरे १६ के०

समयसुंदर शिष्य तेहना तिण चउपई कीधी एहो रे शिष्य तणइ आग्रह करी जे उपरि अधिक सनेहो रे १७ के०

लिखिता चेयं पंडितचारित्रविजय०"

३ "रघुवंशे महाकाव्ये, कृता समयसुन्दरैः । 'अर्थलापनिका' वृत्तिः, पूर्णा सर्गे दशाप्रके ॥"

४ एतत्प्रशस्त्यादिदिदृक्षुभिः प्रेक्ष्यतां भक्तामर-कल्याणमन्दिर-नमिऊणस्तोत्रस्य मदीया भूमिका ( पृ. ३५ ) ।

५ "व्याख्यानं कल्पसूत्रस्य, नवमं सुन्दरं स्फुटम् । शिष्यार्थं पाठकाश्चक्रुः समयादिमसुन्दराः ॥ १ ॥

श्रीशासनाधीश्वरवर्धमानो गुणैरनन्तैरतिवर्धमानः ।

यदीयतीर्थं खखखाक्षनेत्र (२१०००)-वर्षाणि यावद् विजयि प्रसिद्धम् ॥ १ ॥

तदीयशिष्यो गणभृच्च पञ्चमः, सुधर्मनामाऽस्य परम्परायाम् ।

बभूव शाखा किल 'वज्र'नाम्नी, चान्द्रं कुलं चन्द्रकलेव निर्मलम् ॥ २ ॥

तद्गच्छे त्वभिधानतः 'खरतरे' यैः 'स्तम्भना'धीश्वरो

भूमध्यात् प्रकटीकृतः पुनरपि श्लोकोत्करादुद्गता ।

स्थानाङ्गादिनवाङ्गसूत्रविवृतिर्नव्याऽतिभव्या कृता

श्रीमन्तोऽभयदेवसूरिगुरवो जाता जगद्विश्रुताः ॥ ३ ॥

यो योगिनीभ्यो जगृहे ददौ च, वरान् वरान् आप्तदनेकविद्यः ।

पञ्चापि वीरान् स्ववशीचकार, युगप्रधानो जिनदत्तसूरिः ॥ ४ ॥

.............................................

तत्पट्टानुक्रमतः श्रीमज्जिनचन्द्रसूरिनामानः । जाता युगप्रधाना 'दिल्ली'पतिपातिसाहिकृताः ॥ ६ ॥

अकबरअनपूर्वं द्वादशसूत्रेषु सर्वदेशेषु । स्फुटतरममारिपटहः प्रवादितो यैश्च सूरिवरैः ॥ ७ ॥

ग्रन्थनाम
[१]ऋषभभक्तामरम्
[२]दुरियरयसमीरवृत्तिः
[३]जीवविचार-नवतत्त्व-दण्डकटीका

... ... ... ... ... ... ...
तेषां श्रीजिनचन्द्राणां, शिष्यः प्रथमतोऽभवत् ।
गणिः सकलचन्द्राख्यो, 'रीहडा'न्वयभूषणः ॥ १० ॥
तच्छिष्यसमयसुन्दरसदुपाध्यायैर्विनिर्मिताध्यायैः ।
कल्पलतानामाऽयं ग्रन्थश्चक्रे प्रयत्नेन ॥ ११ ॥
प्रक्रियाहैमभाष्यादि, पाठकैश्च विशोधिता ।
हर्षनन्दनवादीन्द्रैः, चिन्तामणिविशारदैः ॥ १२ ॥
... ... ... ... ... ... ...
राज्ये श्रीजिनराजसूरिसुगुरोर्बुद्ध्या जितस्वर्गुरोः ।
... ... ... ... ... ... ...
राजन्ते जिनराजसूरिगुरवस्ते साम्प्रतं भूतले ॥ १९ ॥
... ... ... ... ... ... ...
युवराजे जिनसागरसूरिवरे विजयिनि प्रकृतिसौम्ये ॥ २० ॥
इति श्रीसमयसुन्दरोपाध्यायविरचिता कल्पलतानाम्नी कल्पसूत्रटीका समाप्ता ।"

१ अस्याद्यान्तिमे पद्ये यथा—

"नम्रेन्द्रवन्द्य ! कृतभद्र ! जिनेन्द्रचन्द्र-ज्ञानात्मदर्शपरिदृष्टविशिष्टविश्व ! ।
त्वन्मूर्त्तिरर्त्तिहरणी तरणी मनोज्ञे-वालम्बनं भवजले पततां जनानाम् ॥ १ ॥"
"श्रीमन्मुनीन्द्रजिनचन्द्रयतीन्द्रशिष्य-पूर्णेन्दुशिष्यसमयादिमसुन्दरेण ।
भक्तामरस्तवनतुर्यपदं समस्या-काव्यैः स्तुतः प्रथमतीर्थपतिर्गृहीत्वा ॥ ४५ ॥"

२ श्रीजिनवल्लभमुनीशैः नानाच्छन्दस्सु ४४पद्यात्मकस्य प्रणीतस्य वीरचरितस्तवस्य प्रारम्भिकपदानीमानि, सम्पूर्णं पद्यं तु यथा—

"दुरियरयसमीरं मोहपंकोहनीरं, पणमय जिणवीरं निज्जियाणंगवीरं ।
भयभडपडिकूलं तस्स मुक्खाणुकूलं, चरियमिह समूलं किंचि कित्तेमि थूलं ॥ १ ॥"

वृत्त्यादौ अयमुल्लेखः—

"नत्वा वीरजिनेन्द्रं दुरियरयसमीरस्य च वृत्तिमहम् ।
अतिसुगमामिह वक्ष्ये शीघ्रं तस्यार्थबोधार्थम् ॥ १ ॥
श्रीजिनचन्द्रगणाधिपशिष्यादिमसकलचन्द्रगणिशिष्याः ।
प्रवदन्ति समयसुन्दरनामानः पाठकाः प्रकटम् ॥ २ ॥"

३ भावनगरस्थश्रीआत्मानन्दजैनसभाऽन्तर्गतमुनिराजश्रीभक्तिविजयभाण्डागारसत्कजीवविचार-नवतत्त्व-दण्डक-सटीकप्रतिप्रान्तेऽयमुल्लेखः—

"संवति रस(?स)निधिगुहमुखसोम(१६९६ ?)मिते नभसि कृष्णपक्षे च ।
'अमदावादे' 'हाजापटेल'पोलीस्थशालायाम् ॥ ३ ॥
श्रीमत्'खरतर'गच्छाधीश्वरजिनचन्द्रसूरिशिष्योऽभूत् ।
गणिसकलचन्द्रनामा 'रीहड'गोत्री च पुण्यात्मा ॥ ४ ॥
तच्छिष्यसमयसुन्दर एतां वृत्तिं चकार चारुतया ।
अतिसुगमां च सुबोधां पठन्तु भो पाठयन्तु द्राक् ॥ ५ ॥"

एतावत्य एव कृतयः श्रीसमयसुन्दरगणीनामिति न समीचीनम्; अन्या अपि लघ्व्यः कृतयो गौर्जरगिरि सन्ति, परन्तु ग्रन्थगौरवभयात् तन्नामोल्लेखो न क्रियतेऽत्र।

श्रीसमयसुन्दरगणीनां शिष्यादिनामजिज्ञासुभिः प्रेक्ष्यतां चुनीजीभाण्डागारसत्कमहाराजकुमारचरित्रगतो निम्नावतारित उल्लेखः—

५ "श्री'खरतर' गच्छ जगतमां प्रतपै जाणि दिणंद सु०
सहु गछ मांहे सिरतिलो रे ग्रहगणमां जिम चंद सु० ६

गुण गिरुवौ तिहां गच्छपति रे श्रीजिणचन्द्र(द) सूरिंद सु०
महिमा मोटी जेहनी रे मानै वडा नरिंद सु० ७

ज्ञानपयोधि प्रबोधि वारे अभिनव ससिहर प्राय सु०
१० कुमुदचंद्र उपमा वहे रे समयसुन्दर कविराय सु० ८

ततपर शास्त्र समरथिवा रे सार अनेक विचार सु०
वलि कलिंदका कमलिनी रे उल्लासन दिनकार सु० ९

विद्यानिधि वाचक भला रे मेघविजय तसु सीस सु०
तस सतीर्थ्य वाचकवरु रे हर्षकुशल सुजगीस सु० १०
१५ तासु शिष्य अति शोभता रे पाठक हर्षनिधान सु०
परम अध्यातम धारवा रे जे योगींद्र समान सु० ११

तीन शिष्य तसु जाणीए रे पंडित चतुर सुजाण सु०
साहित्यादि ग्रंथना रे निर्वाहक गुण जाण सु० १२
प्रथम हर्षसागरसूरी रे ज्ञानतिलक गुणवंत सु०
२० पुण्यतिलक सुवषाणतां रे हीयदो हेज हरषंत सु० १३

तास चरणसेवक सदा रे मधुकर पंकज जेम सु०
प्रमुदित चित्तनी चुंपसुं रे रास रच्यो मैं एम सु० १४
संवत सतरै बावनै (१७५२) रे श्री'पाटण'पुर मांहि सु०
फागण सुदि पांचम दिने रे गुरुवारे उच्छांहि सु० १५
२५ ढाल बायालीस अति भली रे नव नव राग प्रधान
अडलातीस ने आठसै (८४८) रे गाथानो छै मान सु० १६

... ... ... ... ... ... ...

ढाल चवदमी मन गमी रे सहु रीझ्या ठाम ठाम
ज्ञानतिलक गुरु सांनिधि रे विनयचंद्र कहे आम सु० १८

इति.... संवत् १८१० वर्षे मिति चैत्रसुदि ११ शुक्रे महोपाध्यायश्री[१]श्रीपुण्यचन्द्रजीगणि। तत्सि(च्छि)ष्य पुण्यविलासजी गणि। तदंतेवासी वाचकपुण्यशीलगणिलिखिता चतुष्पदिका। 'बाकरोद'ग्राममध्ये।"

किञ्च विलोक्यतां 'सुसढचोपइ'प्रान्तिमो भागः—

"श्रीजिनचंद सूरीसरू रे सकलचंद तसु सीस
समयसुंदर पाठक सदा रे जयवंता जगदीस ७६०
पाटोधर तसु परगडा रे कंदवादकुद्दाल
हरषनंदन वाचक हठी रे प्रीछइ बाल गोपाल ८६०
जयकीरत वाचक ज्या रे सीहां सीह सुसिष्य
राजसोम पाठक रिधू रे प्रसिद्ध है तासु प्रसिष्य ९६०
ग्यानलाभ गणि गुण निलो रे अंतेवासी अम्ह
समयनिधान वाचक सुखीरे तिण कह्यो चोपइ तुम्ह १०६०
सुसढ तणी अति सुंदरु रे मुझ सिष्य नाम मुरारि
तेहनै करि देवो तुम्हे रे अरज एह अवधारि ११६०
चतुर जोडाई उपइ रे श्रीजिनधर्मसूरीस
... ... ... ... ... ... ...
रिधू तलै तसु राजमई रे संवत सतरै सैतीस
'अकबराबाद' कीधी अम्हे रे आलमगीर अधीस १३६०

...संवत् १८१८ वर्षे फागुणमासे कृष्णपक्षे पंचमीतिथौ शनिवासरे श्रीदेशणोकमध्ये भ० श्रीजिनभक्तिसूरिजीशिष्यवाचनाचार्यश्रीमाणिक्यसागरजीगणिशिष्यपं०तत्त्वधर्मे लिखीचक्रे 'देसणोक'ग्रामे चतुर्मासीकृता।"

प्राग्वाटीयलीलादेरूपसीनन्दनश्रीसमयसुन्दरगणीनां जन्मस्थलं 'सत्यपुर'मिति ज्ञायते सीतारामचतुष्पदी ( ख. ६, ढा. ३ )गतेन निम्नावतारितोल्लेखेन—

"मुज जनम श्री'साचोर' मांहि, तिहां च्यार मास उच्छांहि;
तिहां ढाल ए कीधी एके ज, कहे समयसुंदर धरी हेज"

श्रीसमयसुन्दरगणीनां विशारदतादिदिग्दर्शनम्—

एतद्गणीनां मुख्यैः शिष्यैः श्रीहर्षनन्दनैः १६७३तमेऽब्दे प्रणीते मध्याह्नव्याख्यानपद्धतिनामके ग्रन्थे स्वगुरुनिपुणतादिमाश्रित्य किमपि प्रोक्तम्। तच्चैवम्—

"जिनचन्द्रसूरियुगवरराजानां शिष्यमुख्यगणनायाम्।
गणिसकलचन्द्रविबुधाः सद्गुरुभक्ताः सदा आसन्॥ ११॥

१ प्रेक्ष्यतां देवीदासगुम्फितं गीतम्।

तेषां शिष्या मुख्या वचनकलाकविकलासु निष्णाताः ।
तर्कव्याकृतिसाहित्यज्योतिःसमयतत्त्वविदः ॥ १२ ॥
प्रज्ञाप्रकर्षः 'प्राग्वाटे' इति सत्यं व्यधायि यः ।
येषां हस्तात् सिद्धिः सन्ताने शिष्यशिष्यादौ ॥ १३ ॥
५ अष्टलक्षानर्थानेकपदे प्राप्य ये तु निर्ग्रन्थाः ।
संसारसकलसुभगा विशेषतः सर्वराजानाम् ॥ १४ ॥
तेषां शिष्यो मुख्यो वादी इह हर्षनन्दनो नाम्ना ।"

एवं विविधहस्तलिखितप्रत्याधारेण यथामति सम्पादितेऽस्मिन् मनोमोहके ग्रन्थे मम प्रयासस्य साफल्यमापादयितुं प्रयतन्तां प्रेक्षावन्तो मह्यं निर्दिशन्तु निरीक्षकाः सहृदयाश्च छद्मस्थ-
१० सुलभाः स्खलना इति निवेदयति २४५७तमे 'वीर'संवत्सरे आषाढकृष्णैकादश्यां मोहमयीनगर्यां भूलेश्वरवीथ्या विदुषां वशंवदो हीरालालः श्रीयुतरसिकदासनन्दनः ।

श्रीसमयसुन्दरगणिकृता

# ॥ अर्थरत्नावली ॥

## (अष्टलक्षार्थीत्यपरनाम्नी)

---

श्रीसर्वज्ञाय नमः । ५

श्रीसूर्यः श्रेयसे भूयाद्, भक्तितत्परभूस्पृशाम् ।
यस्य नामसहस्रस्य, जापः पापहरो भवेत् ॥ १ ॥–अनुष्टुप्

सान्निध्यं कुरुताद् ब्राह्मी–देवता वरदायिनी ।
सेवका यत्प्रसादेन, साधयन्तीप्सितं फलम् ॥ २ ॥–अनुष्टुप्

"राजानो ददते सौख्यं" इति श्लोकैकपादस्य मया निजबुद्धिवृद्धिनिमित्तम् अर्थाः १० क्रियन्ते । तत्र प्रथमं श्रीसूर्यदेववर्णनमाह—

### राजा नो ददते सौख्यम् ॥ १ ॥

"सावित्रीभाविता राजा, विसृजो विघृणो विराट् ।
सप्तार्चिः सप्ततुरगः, सप्तलोकनमस्कृतः ॥ १ ॥"–अनुष्टुप्

इति श्रीस्कन्दपुराणे श्रीसूर्यसहस्रनामान्तर्भणितत्वाद् राजा–श्रीसूर्यः नः–अ- १५ स्माकं सौख्यं–सुखं–ददते–ददाति । इदं श्रीसूर्यदेवताभक्तजनानां वचनम् ॥ १ ॥

पुनः प्रकारान्तरेण श्रीसूर्यदेवस्यैव वर्णनमाह—

### राजा आ नो ददते असौख्यम् ॥ २ ॥

"ऋशब्दः पावके सूर्ये, धर्मे दाने धने पुमान् ।
आ अरौ अर एतानि, अरं चारौ ऋंश्च शसि ॥ १ ॥"–अनुष्टुप् २०

इति श्रीविश्वशम्भुवचनप्रामाण्यात् आ–सूर्यः–श्रीआदित्यदेवः, "अमानोनाः प्रतिषेधे" इति (एकाक्षरी) वचनात् नो–न असौख्यं न सौख्यं असौख्यं, दुःखमित्यर्थः, तत्

ददते, प्राणिनामिति शेषः, सर्वदैव सर्वेषां सौख्यदानात्। किंविशिष्ट आ? 'राजा' राजते–दीप्यते विश्वव्यापिप्रभाभिरिति राजा। इदमपि श्रीसूर्यसेवकानामेव वचनम् ॥२॥

अथ पुनः प्रकारान्तरेण श्रीब्रह्मविष्णुशिवदेवानाश्रित्यार्थमाह—

रा-अज-अ-अ नः अददत ईसौख्यम् ॥ ३ ॥

५ "रा रमा रमणी बाला" इति विश्वशम्भुवचनात् रा तत्पर्यायत्वात् श्रीः। तथा अजः–ब्रह्मा। "अः कृष्ण" इति श्रीअमरवचनात् अः–श्रीकृष्णः। तथा "अः शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु" इति विश्वशम्भुवचनप्रामाण्यात् अः–शिवः। ततः अजश्च अश्च अश्च अजाः। (रया–) श्रिया उपलक्षिता अजाः (राजाः–) श्रीअजाः–श्रीब्रह्मविष्णुशिवाख्यास्त्रयोऽपि देवाः नः–अस्माकं, "ईः श्रीः" इति श्रीअमरकविव-
१० चनप्रामाण्यात् ईः–श्रीः तस्याः तत्सम्बन्धि वा सौख्यं–सुखं ईसौख्यं ऋद्धिसौख्यमिति यावत् अददत–अदुरित्यर्थः। इदं तत्तत्सेवकानां वचनम्।

अत्र राशब्दो व्यवधानेन श्रीप्रतीतिकृदपि श्लेषचित्रादित्वात् न दोषभाक्। यथा—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुराऽस्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गां च योऽधारयत्[1]।
१५ यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः[2]॥१॥"[3]–शार्दूलविक्रीडितम्

इत्यादि। एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३ ॥

---

१ 'यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः' इति पाठः सुभाषितरत्नभाण्डागारे।

२ 'सोऽव्याद्दिष्टभुजङ्गहारवलयस्त्वां सर्वदोमाधवः' इत्यपि पाठः सुभाषितरत्नभाण्डागारे।

३ इदं कूटकाव्यं तस्मादस्य टिप्पणकं दीयते, हरपक्षे यथा–स उमाधवः–पार्वतीपतिः त्वां सर्वदा–सदा पायात्–रक्षतु। स किंभूतः? यो गङ्गामधारयत् येन बलिं जितवानिति बलिजित्–विष्णुः तस्य कायः–शरीरं पुरा–त्रिपुरवधकाले अस्त्रीकृतः–अस्त्रत्वेन सम्पादितः। किंभूतेन येन? 'ध्वस्तमनोभवेन' ध्वस्तः–क्षपितः मनोभवः–रतिपतिर्येन स तेन। पुनः किंभूतः सः? 'यश्चोद्वृत्त॰' हाराश्च वलयानि च हारवलयम्, उद्वृत्ताश्च ते भुजङ्गाश्च उद्वृत्तभुजङ्गाः, ते हारवलयं यस्य सः, उद्वृत्तभुजङ्गाः–सर्पाः हारः–कण्ठाभरणं वलयं–कटकं भुजभूषणमित्यर्थः। पुनः स किंभूतः? यस्य शिरः–मस्तकं 'शशिमत्' शशी–चन्द्रोऽस्ति यस्मिन् तत् शशिमत्। पुनः स किंभूतः? यस्य स्तुत्यं–प्रशंसनीयं नाम–अभिधानं अमरा–देवा इति आहुः–अकथयन्। इतीति किम्? हर इति–महादेव इति। पुनः स किंभूतः? स्वयं–आत्मना अन्धकनामा दैत्यः तस्य क्षयकरः–अन्तकृत्।

हरिपक्षे यथा—

येन ध्वस्तमनो भवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहा रवलयोऽगं गां च योऽधारयत्।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥ १ ॥

सर्वं–समस्तं ददाति–यच्छतीति सर्वदः स माधवः–लक्ष्मीपतिः मा–लक्ष्मीः तस्या धवः–पतिः माधवः त्वां पायात्–अवतु। स कः? येन भवेनेत्युत्पन्नमात्रेण धृतदेहेनेत्यर्थः, अनः–शकटाकृतिर्दानवः ध्वस्तं–अघानि, अथवा अकारप्रश्लेषं कृत्वा अभवेनेति घोरसंसारसमुद्रे पूर्वकर्मानुसारेण न विद्यते भवो–जन्म यस्य स तेन कृष्णलीलामृत-

## रा अजा नो ददते सौख्यम् ॥ ४-८ ॥

"रा रमा रमणी बाला" इति (विश्वशम्भु)वचनाद् रा-रमणी नः-अस्मभ्यं सौख्यं ददते। किंविशिष्टा रा? 'अजा'। "अजश्छागे हरे विष्णौ, रघुजे वेधसि स्मरे" इति हैमानेकार्थ(श्लो० ८०)वचनात् अजं-हरं १ विष्णुं २ रघुजं ३ ब्रह्माणं ४ स्मरं ५ वा। अटति अतति-गच्छतीति अजा-पार्वती १ लक्ष्मीः २ इन्दुमती ३ सावित्री ४ रतिश्च ५। इदं तत्तद्भक्तानां वचनम्। अर्थाः ५ सर्वे ॥ ४-८ ॥ ५

## राज! आः नो दद! ते सौख्यम् ॥ ९ ॥

"रा रमा रमणी बाला"इति (विश्व०)वचनाद् रा-लक्ष्मीः। ततः "जश्च जेतरि जनने विगते" इति सुधाकलश(श्लो० १८)वचनात् जः-जननं यस्य स राजः कन्दर्पः लक्ष्मीनाममातृजातत्वात्। तत्सम्बोधनं हे राज!-हे कन्दर्प!। "आः सन्तापकोपयोः" इति तिलकानेकार्थवचनात् आ इति कोपे। ते-तुभ्यं सौख्यं-सुखं नो-न, अस्तु इति शेषः। तव सुखं माऽस्तु इत्यर्थः। यतः हे दद! "दं कलत्रम्" इति सुधाकलश(श्लो० २५)वचनात् दं-कलत्रं द्यति-खण्डयति-पीडयतीति ददः, अबलासन्तापकारक इत्यर्थः। तत्सम्बोधनं हे दद!। इदं कान्तविरहे कामपीडितायाः कामिन्याः कामं प्रति आक्रोशदानवचनम् ॥ ९ ॥ १० १५

## रा आजा नः अददत ईसौख्यम् ॥ १० ॥

"आ स्वयम्भूः" इति श्रीअमरकविवचनात् आ-ब्रह्मा ततो जा-जाता आजा-श्रीसरस्वती देवीत्यर्थः। नः-अस्माकं अस्मभ्यं वा ईसौख्यं-लक्ष्मीसौख्यं अददत-अदत्तेत्यर्थः। किंविशिष्टा आजा? 'रा' राजते-दीप्यते-शोभते। 'क्वचिड्डः' (सिद्धहेमे अ० ५, पा० १, सू० १७१) इति डप्रत्यये अपि च रा ॥ १० ॥ २०

## राजा नो ददते सौख्यम् ॥ ११ ॥

"रं जले रङ्गवेगयोः" इति विश्वशम्भुवचनात् रेण-रङ्गेण अजेन-छागेन वाहनरूपेण अजति-गच्छतीति राजा-अग्निः, छागवाहनत्वात् नो-न सौख्यं ददते-ददाति, दाहकत्वात्। अथवा नः-अस्माकं सौख्यं-सुखं ददते, रन्धनशीताद्यपहारकत्वेन परमोपकारकत्वात् ॥ ११ ॥[2] २५

---

विग्रह इति। पुनः स कीदृशः? येन सुधाविभागार्थं शिवमोक्षार्थं वा बलिजिघांसौ कायश्चेति पुरा स्त्रीकृतः-स्त्रीभावं प्रापितः। पुनः कीदृशः? यः अगं-गोवर्धननामगिरिं गां-पृथ्वीं च अधारयत्-दधे। पुनः कीदृशः? यः अब्धे-अगाधे के-जले क्षयं-गृहं करोतीति, विष्णुर्जलशायीति प्रसिद्धिः। पुनः कीदृशः? अमरा यस्य इति स्तुत्यं नाम आहुः। इतीति किम्? शशिमच्छिरोहर इति, शशिनं-चन्द्रं मथ्नातीति शशिमत्-राहुः तस्य शिरो हरतीति सः। पुनः कीदृशः? उद्धृतो भुजङ्गहा-गरुडो यस्य सः, तथा रवे-परब्रह्मणि लयः-एकाग्रता यस्य सः अथवा अकारप्रश्लेषं कृत्वा अरं-सुदर्शननामचक्रं वलयं यस्य सः।

१ अयमङ्कोल्लेखः श्रीसुधाकलशमुनीशकृतैकाक्षरीनाममालिकाया आधारेण सूचितः। २ अत्र द्वौ अर्थौ पृथग् ज्ञेयौ न वेति प्रश्नः।

## रा अजा नो ददते सौख्यम् ॥ १२ ॥

रा–लक्ष्मीः नः–अस्माकं सौख्यं ददते । किं० रा? 'अजा' न जायते इत्यजा, शाश्वतीत्यर्थः । अर्थयोजना स्वयं कार्या सुधीभिः ॥ १२ ॥

## राजा ना उ ददते असौ खी अम् ॥ १३ ॥

५ "एते चतुर्दशापि स्वराः सम्बोधन-पादपूरण-भर्त्सना-मन्त्रण-निषेधेषु" इति श्रीबृहद्व्यासवचनप्रामाण्यात् 'उ' इति सम्बोधने । असौ–प्रत्यक्षो ना–पुमान् अं–परब्रह्म ददते–ददाति । किं० ना? 'राजा' राजभिः–नृपैः आ–शोभा यस्य स राजा, राजभिः सेव्यत्वात् । पुनः किं० ना? 'खी' । "खमिन्द्रिये स्वर्गे व्योम्नि नृपे शून्ये सुखे संविदि" इति श्रीअमरकविवचनप्रामाण्यात् खं–सुखं ज्ञानं वा तद् अस्यास्तीति खी, सुखवान् ज्ञानवान् १० वा इत्यर्थः ॥ १३ ॥

## राजाव् नो ददते सौख्यम् ॥ १४ ॥

रेण–रङ्गेण अजां–गलस्तनीं वृश्चति–छेदयतीति राजावृट् तं राजावृश्चं आचष्टे–स्तौतीति 'णिज्बहुलं नाम्नः कृगादिषु' ( सिद्ध० अ० ३, पा० ४, सू० ४२ ) इति णिजि, 'णेरनिटि' ( सिद्ध० अ० ४, पा० ३, सू० ८३ ) इति णिज्लुकि क्विपि तलुकि च राजाव्–अजा-१५ हन्तृस्तुत् कोऽपि पापिष्ठमतिः नो–न सौख्यं ददते, हिंसाकारकनरस्तोतृत्वात् । अत्र 'व्योः' ( सिद्ध० अ० १, पा० ३, सू० २३ ) इति सूत्रेण वलोपे राजानो ददते सौख्यमिति रूपसिद्धिः । यदाहुः श्रीहेमसूरिपादाः—व्योः अवर्णात् परयोः पदान्तस्थयोर्वययोर्घोषवति परे लुक् स्यात् स च असन्धिः । वृक्षवृश्चं अव्ययं च आचक्षाणो वृक्षव् अव्यय् वृक्षयाति अव्ययाति । एवमेतत्सूत्रेण अग्रेऽपि सति प्रयोजने वययोर्लोपः २० कर्तव्यः ॥ १४ ॥

## राजाय् नो ददते सौख्यम् ॥ १५ ॥

रा–रमा–लक्ष्मीः जाया–भार्या यस्य स राजायः श्रीकृष्णः, लक्ष्मीभार्यत्वात्, तं राजायं–कृष्णं आचष्टे–सेवकत्वात् स्तौतीति णिजि तलुकि क्विपि तलुकि च राजाय्–कृष्णस्तोता । नः–अस्मभ्यं सौख्यं ददते । इदं वैष्णववचनम् । अत्रापि 'व्योः' ( सिद्ध० २५ अ० १, पा० ३, सू० २३ ) इति सूत्रेण यलोपे कृते राजा नो ददते सौख्यमिति रूपसिद्धिः । एवमग्रेऽपि । शेषं पूर्ववत् ॥ १५ ॥

## र! अजाय् नो ददते सौख्यम् ॥ १६ ॥

"[1]रः स्मरे तीक्ष्णे विश्वानरे शब्दे रामे वज्रे नरे" इति सुधाकलशवचनात् हे र!–हे नर! । न विद्यते जाया–स्त्री यस्य सः अजायः–स्त्रीरहितः । उपलक्षणत्वात् स्त्र्यादि-

---

१ "रः कामे तीक्ष्णे वैश्वानरे नरे ॥ ३६ ॥ रामे वज्रे च शब्दे स्यात्" इति सुधाकलशैकाक्षरनाममालिकायाम् ।

सर्वपरिग्रहरहितः, यतिरित्यर्थः । तमाचष्टे—स्तौतीति अजाय् । नः—अस्माकं सौख्यं ददते । यलोपादिः पूर्ववत् । अर्थयोजना स्वयं कार्या ॥ १६ ॥

### ऋ-आजा नो ददते असौख्यम् ॥ १७ ॥

"ऋर्देवमातरि" इति ( श्रीसुधाकलशमुनीशकृताया एकाक्षरनाममालिकायाः श्लो० ६ ) वचनात् ऋं—देवमातरं आ—सामस्त्येन अजन्ति—सुरारित्वेन क्षिपन्तीति राजा— ५ दैत्याः । नः—अस्माकं असौख्यं ददते । इदं सुराणां वचनम् । अत्र 'इवर्णादेरस्वे स्वरे यवरलम्' ( सिद्ध० अ० १, पा० २, सू० २१ ) इति सूत्रेण रत्वे सन्धौ च कृते राजा नो ददते असौख्यमिति रूपसिद्धिः ॥ १७ ॥

### राजा नो ददते सौख्यम् ॥ १८ ॥

"ऋस्त्वजे दानवाञ्छायाम्" इति ( सुधा० श्लो० ७ )वचनात् ऋः—अजो— १० मेषः तेन वाहनभूतेन अजति—गच्छतीति रजः—अग्निदेवता तस्य इमे राजाः—अग्निहोत्रीया ब्राह्मणाः नः—अस्माकं सौख्यं ददते । अर्थयोजना स्वयं कार्या ॥ १८ ॥

### ऋ-आजा नो ददते असौख्यम् ॥ १९ ॥

ऋः—दानवाञ्छा तस्या आजः—क्षेपो येभ्यः येषां वा ते रत्वे कृते राजाः—कृपणाः नः—अस्माकं असौख्यं ददते—प्रयच्छन्ति, वितरणाभावात् । इदं याचकानां वचनम् ॥१९॥ १५

### ऋ-आ-अजा नो ददते असौख्यम् ॥ २०—२१ ॥

"ऋशब्दः पावके सूर्ये धर्मे दाने धने पुमान्" इत्यादि (विश्व०)वचनात् अरं—पावकं—अग्निदेवं आ—सामस्त्येन अजन्ति—देवत्वेन गच्छन्तीति रत्वे कृते राजाः—अग्निदेव-सेवकाः नो—न असौख्यं ददते । इदं अग्निहोत्रीयब्राह्मणवचनम् ॥ २० ॥

एवं अरं—सूर्यं—आदित्यदेवं आ—सामस्त्येन अजन्ति—देवत्वेन गच्छन्तीति रत्वे कृते २० राजाः—श्रीसूर्यदेवोपासकाः नो—न असौख्यं ददते । इदमपि तद्विधानामेव वचनम् ॥ २१ ॥

### ऋ-आ-अजा नो ददते सौख्यम् ॥ २२—२४ ॥

अरं—धर्मं दानं धनं वा आ—सामस्त्येन अजन्ति—गच्छन्ति प्राप्नुवन्तीति रत्वे कृते राजाः—धर्मिष्ठाः गुणिनः गुणाढ्याश्च पुरुषाः नः—अस्माकं सौख्यं—सुखं ददते ॥ ३ ॥ इदं उत्तमजनवचनम् ॥ २४ ॥ २५

### ऋ-आजा नो ददते सौख्यम् ॥ २५—२७ ॥

ऋशब्दस्य प्रथमैकवचने आ इति रूपम् । ततः आ इति धर्मो दानं धनं च तस्य आजः—क्षेपो येभ्यो येषां ते । रत्वे कृते राजाः नास्तिकाः दानक्षेपकाः विरक्ताश्च पुरुषाः नो—न सौख्यं ददते । इदं आस्तिकानां दातॄणां संसाररक्तानां च वचनम् ॥ ३ ॥ २७ ॥

## राजा आ नो ददते सौख्यम् ॥ २८ ॥

आ–अग्निः नः–अस्माकं सौख्यं ददते । किं० आ ? 'राजा' राजते–दीप्यते भूतले इति राजा ॥ २८ ॥

## राजा आ नो ददते सौख्यम् ॥ २९–३१ ॥

५ आ–धर्मो नः–अस्माकं सौख्यं ददते । किं० आ ? 'राजा' रञ्जयति चतुरनरचेतांसीति राजा । इदं धर्मिष्ठजनवचनम् ॥ २९ ॥

एवं आ–दानं धनं च नः–अस्माकं सौख्यं ददते । किं० आ ? 'राजा' । व्युत्पत्त्यादि पूर्ववत् अर्थद्वयम् ॥ २ ॥ सर्वे ॥ ३१ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३२ ॥

१० ऋः–देवमाता तां आ–सामस्त्येन अजन्ति–मातृत्वेन गच्छन्तीति रत्वे कृते सन्धौ च सति राजा–देवाः नः–अस्माकं असौख्यं ददते । इदं दैत्यानां वचनम् ॥ ३२ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३३ ॥

"ऋर्दितौ स्यादजे" इति तिलकानेकार्थवचनात् ऋः–दितिस्तां आ–सामस्त्येन अजन्ति–मातृत्वेन गच्छन्तीति राजाः–दैत्याः नः–अस्माकं असौख्यं ददते । इदं सुराणां १५ वचनम् ॥ ३३ ॥

## ऋ-आ-अजा नो ददते असौख्यम् ॥ ३४ ॥

ऋः–मेषस्तं आ–सामस्त्येन अजन्ति–क्षिपन्तीति रत्वे कृते राजाः–सिंहादयः नः–अस्माकं असौख्यं ददते । इदं मृगाणां वचनम् ॥ ३४ ॥

## ऌ-आ-अजा नो ददते सौख्यम् ॥ ३५ ॥

२० "ऋ(ॡ ?)[1]वाराह्याम्"इति तिलकानेकार्थवचनात् ऋः (ॡः ?)–वाराहीदेवता तां आ–सामस्त्येन अजन्ति–देवत्वेन गच्छन्तीति लाजाः–वाराहीभक्ताः पुरुषाः नः–अस्मभ्यं सौख्यं ददते । इदं तद्विधानामेव वचनम् । अत्र 'इवर्णादेरस्वे स्वरे यवरलम्' ( सिद्ध० अ० १, पा० २, सू० २१ ) इति सूत्रेण लत्वं विधेयम् । अत्र चित्रादित्वाद् रलयोरैक्यं न दोषाय । यदाह—

२५ "अहमपि परेऽपि कवय–स्तथापि महदन्तरं परं ज्ञेयम् ।
ऐक्यं रलयोरिति यदि, तत् किं [2]कलभायते करभः ? ॥ १ ॥"

एवमग्रेऽपि सति प्रयोजनेऽनुसर्तव्यम् ॥ ३५ ॥

---

१ "ऌर्वाराह्यां" इति सुधा० ( श्लो० ७ ) । २ 'करभायते कलभः' इति सुभाषित० ।

## लाजाय् नो ददते सौख्यम् ॥ ३६ ॥

लाजेभ्यः-तन्दुलेभ्य आयं-लाभं आचष्टे इति लाजाय् एवंविधः कोऽपि जनः नः-अस्माकं सौख्यं ददते। णिजादिविधिः पूर्ववत्। अर्थयोजना स्वयं कार्या ॥ ३६ ॥

## लाव् जा ! नो ददते असौख्यम् ॥ ३७ ॥

"ला च लक्ष्मीर्लमम्बरे" इति विश्वशम्भुवचनात् लां-लक्ष्मीं अवति-स्वामीभवतीति लावो-लक्ष्मीवान्। तमाचष्टे-स्तौतीति णिजि लावयतीति णिज्लुकि क्विपि तल्लुकि च लाव्। "जंस्तु जेतरि" इति (विश्वशम्भु)वचनात् हे जाः!-जेतृजनाः! लाव्-लक्ष्मीस्वामिस्तावकः नो-न असौख्यं ददते। अर्थयोजना स्वयं कार्या। अत्र 'अव रक्षणगतिकान्तिप्रीतितृप्त्यवगम[न]प्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु' इति (पाणिनीयधातुपाठे ६००) उक्तत्वात् अवधातुः स्वाम्यर्थो ग्राह्यः। एवमेव शतार्थिभिर्जयसुन्दरसूरिभिरपि उक्तम्। तथाहि— जं-जन्म यान्ति-प्राप्नुवन्तीति जया-जन्मिनस्तेषु ये वृषभाः-श्रेष्ठाः भव्यत्वात् तेषां अवति-स्वामीभवतीति जयवृषभावः इत्यादि ॥ ३७ ॥

## राजा नो ददते असौख्यम् ॥ ३८ ॥

"ऋ तु कुत्सायाम्" इति सुधाकलश(श्लो० ६)वचनात् ऋ इति कुत्सा तां अजन्ति-गच्छन्तीति रत्वे कृते रजाः-कुत्सागामिनः पुरुषाः तेषामिमे राजाः। एवंविधाः केचन पुरुषाः नः-अस्माकं असौख्यं ददते। इदं प्रतिष्ठितजनवचनम् ॥ ३८ ॥

## लाजाव् नो ददते सौख्यम् ॥ ३९ ॥

लाजानां-तन्दुलानां अवं अवनं-रक्षणं करोतीति लाजाव्-तन्दुलरक्षकः। अत्र करोत्यर्थे णिज् ज्ञेयः। नः-अस्माकं सौख्यं ददते। अर्थयोजना स्वयं कार्या ॥ ३९ ॥

## राजाय् नो ददते सौख्यम् ॥ ४० ॥

रा-रमा-लक्ष्मीस्तस्या जो-जातः राजः-कामस्तं अयति-गच्छतीति राजायः-कामिजनः तमाचष्टे-स्तौतीति णिजादिविधौ राजाय्-कामिजनस्तावकः। नो-न सौख्यं ददते। इदं विरागिणो वचनम् ॥ ४० ॥

## राजाय् नो ददते सौख्यम् ॥ ४१ ॥

राजानं-नृपं चन्द्रं वा अयति-गच्छतीति राजायः तमाचष्टे इति राजाय्। एवंविधः कोऽपि जनो नः-अस्माकं सौख्यं ददते। अर्थयोजना स्वयं कार्या। यलोपः पूर्ववत् ॥ ४१ ॥

---

१ 'जश्च जेतरि' इति सुधा० (श्लो० १८)।

## राजाय् नो ददते सौख्यम् ॥ ४२ ॥

राजवत्–नृपवत् आयो–भाग्यं यस्य स राजायः एवंविधः कोऽपि जनः तमाचष्टे–स्तौतीति राजाय्। नः–अस्माकं सौख्यं ददते। अर्थयोजना तु (यत्र) कृता न भवति तत्र स्वयं कार्या। मया तु ग्रन्थगौरवभयान्न लिख्यते ॥ ४२ ॥

५ 

## रा जाय्! नो ददते असौख्यम् ॥ ४३–४४ ॥

जयानां समाहारो जायं–जयसमूहं आचष्टे इति जाय्–बन्दिजनादिः तत्सम्बोधनं हे जाय्! "राः कनके विभवे मेघे स्थानके"[1] इति सुधाकलशवचनात् राः–कनकं (१) द्रव्यं (२) मेघः (३) आश्रयश्च (४)। नो–न असौख्यं ददते। सौख्यं ददते इत्यर्थः। इदं स्वर्णद्रव्यमेघाश्रमा( या?)र्थिनां वचनम् ॥ ४ ॥ स्वयं बुद्ध्या चत्वारोऽप्यर्थाः पृथक् १० पृथक् कार्याः[2] ॥ ४४ ॥

## राजाव् नो ददते सौख्यम् ॥ ४५ ॥

"रं जले रङ्गवेगयोः" इति विश्वशम्भुवचनात् रेण–रङ्गेण अजां–गलस्तनीं अवति–रक्षतीति राजावः–अजारक्षाकृत् कोऽपि धर्मिष्ठो जनः तं आचष्टे इति राजाव्। एवंविधः कोऽपि नः–अस्माकं सौख्यं ददते। अर्थयोजना स्वयं कार्या। वलोपादि पूर्ववत् १५ ज्ञेयं, ग्रन्थगौरवभयात् न वारंवारं सूत्राणि लिख्यन्ते ॥ ४५ ॥

## र! अजाव् नो ददते सौख्यम् ॥ ४६–५० ॥

अवन्ति–स्वामीभवन्तीति अवाः। अजाः हर १ हरि २ ब्रह्म ३ रघुज ४ स्मरा ५–ख्या देवाः अवाः–स्वामिनो येषां ते अजावास्तान् आचष्टे–स्तौतीति अजाव्–हरादिदेवसेवकस्तुत् ५ हे र! हे नर! नः–अस्माकं सौख्यं ददते। अर्थयोजना स्वयं कार्या। २० वलोपादिः पूर्ववत्। एवमत्र पञ्चाप्यर्थाः पृथक् पृथक् स्वयं कार्याः ॥ ५० ॥

## राजाव् नो ददते सौख्यम्[3] ॥ ५१–५६ ॥

राजभ्यो–नृपचन्द्रयक्षेभ्यः आं–लक्ष्मीं अवन्ति–गच्छन्ति प्राप्नुवन्तीति राजावाः–नृपचन्द्रयक्षसेवकाः तान् आचष्टे इति राजाव् ॥ ३ ॥ नः–अस्माकं सौख्यं असौख्यं च ददते। अर्थयोजना स्वयं कार्या। वलोपादिः पूर्ववत्। एवमत्र नृपसेवकस्तावकेन चन्द्र-२५ सेवकस्तावकेन यक्षसेवकस्तावकेन च समं सौख्यासौख्यपदद्वयं मीलयित्वा षडर्थाः कार्याः ॥ ५६ ॥

---

१ "रा द्रव्ये कनके पुनः। आश्रये नीरदे च स्यात्" इति सुधा० (श्लो० ३७)। २ अत्र 'चत्वारोऽप्यर्थाः पृथक् पृथक् कार्याः' इति स्पष्टोल्लेखे सत्यपि आदर्शपुस्तकेषु अर्थाङ्कद्वयमेवोपलभ्यते तच्चिन्त्यम्। ३ अर्थान्तरे 'असौख्यं' इति संयोजना।

## राजाव् नो ददते सौख्यम् ॥ [२]५७–६३ ॥

"रा रमा रमणी बाला" इति (विश्व०)वचनाद् रा–रमा–लक्ष्मीः तस्या आजं–क्षेपं–तिरस्कारं अवति–ददातीति राजावः–लक्ष्मीतिरस्कारदाता तं आचष्टे–स्तौतीति राजाव् नः–अस्माकं सौख्यं ददते। एवं असौख्यं च ददते। अर्थयोजना वलोपादिः पूर्ववत् ॥ २ ॥ एवमेव रमणीवाचकेन बालावाचकेन च राशब्देन समं आजावशब्देन च समं सौख्यासौख्यपदद्वयं मीलयित्वा अर्थचतुष्टयं कार्यम् । व्युत्पत्त्यादि सर्वं पूर्ववत्। अत्र अवधातुर्दानार्थो ज्ञेयः । तथा चोदाहरणं श्रीजयसुन्दरसूरिकृतार्थे—अं–परब्रह्म तत्र सीदन्तीति अंसदः–सिद्धाः तेषां आ–लक्ष्मीः नमतांसदा तां अवति–ददातीत्येवंशीलः नमतांसदावी इत्यादि ॥ ६३ ॥

## राजाव् नो ददते सौख्यम् ॥ [३]६४–६७ ॥

रस्य–स्मरस्य आजं–तिरस्कारं अवति–ददातीति राजाव–ईश्वरः तमाचष्टे–स्तौतीति राजाव्–ईश्वरस्तोता नः–अस्माकं सौख्यं ददते । असौख्यं च ददते । इदं तद्विधानामतद्विधानां च वचनम् । वलोपादिः पूर्ववत् । एवं वह्निवाचकेन नरवाचकेन च रशब्देन समं आजावशब्दे सौख्यासौख्यपदद्वयं च मीलयित्वा अर्थचतुष्टयं कार्यम् । वलोपादिः पूर्ववत् ॥ ६७ ॥

## राजाव् नो ददते सौख्यम् ॥ ६८ ॥

राजा–यमः अर्थात् मरणं तस्माद् अवति–रक्षतीति राजावः–मरणरक्षको भगवद्धर्म इत्यर्थः, तमाचष्टे इति राजाव् नः–अस्माकं सौख्यं ददते। इदं धार्मिष्ठजनवचः। वलोपः पूर्ववत् ॥ ६८ ॥

## राजाव् नो ददते सौख्यम् ॥ ६९–७६ ॥

राज्ञां—चन्द्र–नृप–यक्ष–यमानां आं–शोभां वृश्चन्ति–छेदयन्तीति राजवृश्चो–राहुप्रमुखाः ४ ताम् आचष्टे–स्तौतीति राजाव् ४ नः–अस्माकं सौख्यं असौख्यं च ददते। अर्थयोजना वलोपादिः पूर्ववत् । अत्र विस्तरान्वेषिणा पृथक् पृथक् अष्टौ अर्थाः कार्याः ॥ ८ ॥ ७६ ॥

## राव् जा! नो ददते सौख्यम् ॥ ७७–७८ ॥

रावं–शब्दं करोतीति राव् एवंविधः कोऽपि शब्दकारकः। हे जाः!–हे जेतृपुरुषाः! नो–न ददते सौख्यम्। अनिष्टशब्दस्य (जनस्य) वचनमेतत् १। एवं राव्–शब्दकारकः नो–न ददते असौख्यम् २। इदमिष्टशब्दस्य जनस्य वचनम्। वलोपादिः पूर्ववत् ॥२॥७८॥

---

१ 'असौख्यं' इति अर्थान्तरे, अग्रेऽपि प्रस्तावे एवंविधा संयोजना कार्या। २ अत्र षडर्था दरीदृश्यन्ते तथाप्यादर्शपुस्तकेषु अर्थसप्तकसूचकसंज्ञा समस्ति, तद् विचारणीयं विद्वद्भिः। ३ अर्थषट्कस्थाने आदर्शपुस्तकेषु तु चत्वारोऽर्था गणिताः, तदपि चिन्त्यम्।

राजाव् नो ददते सौख्यम् ॥ ७९–८० ॥

रे–अमी अजाः—त्रैवार्षिका व्रीहयः तान् अवति–दहतीति राजाव्–वह्नी त्रिवार्षिक-व्रीहिहोता तमाचष्टे णिजादिविधौ राजाव् नः–अस्माकं सौख्यं ददते । इदं याज्ञिक-जनवचनम् । अथवा नो–न सौख्यं ददते । दुःखं ददातीत्यर्थः । इदं तद्विरुद्धजनवचनम् । ५ वलोपादिः पूर्ववत् ॥ ८० ॥

अथ प्रकारान्तरेण श्रीजैनमतप्रसिद्धान् अर्हत् १ सिद्ध २ आचार्य ३ उपाध्याय-४ साधु ५ रूपान् पञ्चपरमेष्ठिनः स्तुवन्नाह—

राजा अः नो ददते सौख्यम् ॥ ८१ ॥

"अः स्यादर्हति सिद्धे च विष्णावपि" इति वचनात् अः–अर्हन् नः–असमभ्यं सौख्यं १० ददते । किंविशिष्टः अः? 'राजा' स्वामी, त्रिजगत्प्रभुरित्यर्थः । इदं जैनवचः ॥ ८१ ॥

राजा नो ददते सौख्यम् ॥ ८२ ॥

राजन्ति–सिद्धिशिलायां दीप्यन्ते 'क्वचित्' (सिद्ध० अ० ५, पा० १, सू० १७१) डे राः । तथा जायन्ते–पुनरुत्पद्यन्ते ते जाः, न जाः अजाः–जन्ममरणरहिताः । अजाः–सिद्धाः । ततो राश्च ते अजाश्च राजाः नः–अस्माकं सौख्यं ददते । इदं जन्ममरणादिदुःखविकसर-१५ वचनम् ॥ ८२ ॥

राजा आः नो ददते सौखी अम् ॥ ८३ ॥

"आः स्याद् गणधारिणि" इति वचनात् आः–आचार्यः नः–अस्माकं अं–परब्रह्म ददते । किं० आः? 'राजा' रञ्जयति अमृतस्राविण्या सन्देहसन्दोहकाननकृपाण्या स्याद्वा-दवाण्या सभामिति राजा । पुनः किं० ? 'सौखी' सुखानां संसारविरक्तिरूपाणां समाहारः २० सौखं तदस्यास्तीति सौखी ॥ ८३ ॥

रा ज ! आन् ! ओ ! अदद ! ते असौख्यम् ! ॥ ८४ ॥

उरिति पदैकदेशे पदसमुदायात् उः–उपाध्यायः तत्सम्बोधनं हे ओ !–हे उपाध्याय ! ते–तव रा–दीप्तिः, भवत्विति शेषः । हे ज ! "जस्तु जेतरि" इति (विश्व०)वचनात् हे प्रतिपक्षजेतः ! । पुनः हे आन् ! आ–सामस्त्येन नो–ज्ञानं येभ्यस्तानि आनानि-शा-२५ स्त्राणि, शास्त्रेभ्य एव ज्ञानोत्पादात् अर्थात् द्वादशाङ्गरूपाणि तानि आचष्टे–अर्थतः पाठ-यतीति णिजादिविधौ आन् तत्सम्बोधनं हे आन् ! । पुनः हे अदद ! । अतन्ति–गच्छन्तीति अताः–प्राणिनः तेषु तेषां वा न विद्यते दो–बन्धः छेदो वा यस्मादसौ अददः, षड्जीव-

---

१ समीक्ष्यतां द्वादशं पृष्ठम् । २ अवलोक्यतां पञ्चदशं पृष्ठम् । ३ 'नो ज्ञानबन्धनयोः' इति सुधा० २६ (श्लो० २७) । ४ 'दाने दातरि दा केचिद् विदुर्दो छेदबन्धयोः' इति सुधा० (श्लो० २५) ।

निकायवत्सलत्वात् तत्सम्बोधनं हे आप्य ! । पुनः विनादित्वात् विन्दुलोपे हे असौख्य ! आत्–अर्हतः तीर्थङ्करात् सकाशात् सौख्यं–सुखं यस्य सः असौख्यस्तत्सम्बोधनं हे असौख्य ! । अत्र राशब्दो दीप्तौ ज्ञेयः । तथा च श्रीअभयसुन्दरोदाहरणम्–'तरां तस्य' तस्य–तत्त्वस्य ज्ञानस्य वा रां–दीप्तिम् । तशब्दस्तत्त्वे ज्ञाने चास्ति । राशब्द आकारान्तो दीप्तौ च वर्तते इत्यादि । अत्र ओ इति एकाक्षरत्वेन पदैकदेशोऽपि पदप्रतीतिजनको ज्ञेयः । ५ दृश्यते च इत्थं यथा अप्राशिल इत्यस्य व्याख्याने ।

"[1]अनेन तव पुत्रस्य, प्रसुप्तस्य वनान्तरे ।
शिलामाक्रम्य पादेन, खड्गेन निहतं शिरः ॥ १ ॥"

इति । यथा वा "[2]मिच्छा मि दुक्कडं" इत्यस्य व्याख्यायाम्—

"[3]मित्ति मिउमद्दवत्ते, छत्ति य दोसाण छायणे होइ । १०
मित्ति य मेराइ(ए) ठिओ, दुत्ति दुगुंछामि अप्पाणं ॥ १ ॥
कत्ति कडं मे पावं, डत्ति य डेवेमि तं उवसमेणं ।
एसो मिच्छादुक्कड–पयक्खरत्थो समासेणं ॥ २ ॥"
–( आवश्यकनिर्युक्तौ गा० ६८६–६८७ )

तथा श्रीआवश्यकबृहद्वृत्तावपि[4] "मित्ति मिउमद्दवत्ते" इत्यादि । एवमनेकग्रन्थ- १५ संवादः स्वयं ज्ञेयः सुधीभिः । अक्षराणामपि च वाचकत्वं न चेत् तेषु समुदाये कथं स्यात् सिकतासु तैलवत् इत्यादि ॥ ८४ ॥

## राज अना–उत् ! अदते ! सौख्यम् ॥ ८५ ॥

"नः पुनर्बन्धबुद्धयोः" इति वचनात् न विद्यते नो–बन्धः कर्मबन्धनं यस्याः यस्यां वा अना–निष्पापा एवंविधा उद्–भाषा यस्य सः अनोत् । 'विशेषणाद् विशेष्यप्रतीति'रिति २० साधुः, निरवद्यभाषत्वात्, तत्सम्बोधनं हे अनोत् !–हे साधो ! । त्वमिति क्रियाक्षिप्तक- र्तृत्वे । राज–दीप्तिं प्राप्नुहि । सौख्यं यथा स्यात् तथा, क्रियाविशेषणमेतत् ।

"क्रियाविशेषणस्यापि, सकर्माकर्मधातुषु ।
नपुंसकत्वमेकत्वं, कर्मकत्वं च युज्यते ॥ १ ॥"

---

१ अस्य काव्यस्य प्रत्येकपादप्रारम्भिकाक्षरसंयोजनेन अप्रशिलेति निष्पत्तिः । २५

२ मिथ्या मे दुष्कृतम् ।

३ छाया—

'मि' इति मृदुमार्दवत्वे 'छ' च इति दोषाणां छादने भवति ।
'मि' इति च मर्यादायां स्थितः 'दु' इति जुगुप्सामि आत्मानम् ॥ १ ॥
'क' इति कृतं मया पापं 'ड' इति च लङ्घयामि तद् उपशमेन । ३०
एष मिथ्यादुष्कृतपदाक्षरार्थः समासेन ॥ २ ॥

४ हारिभद्रीयवृत्तौ ।

'राज्(जृ) दीप्तौ' इत्यस्य धातोरुभयपदित्वात् परस्मैपदम् । उदाहरणमपि नैषध-काव्ये (स० १, श्लो० १०)—

"अनल्पदग्धारिपुरानलोज्ज्वलै-र्निजप्रतापैर्वलयं ज्वलद्भुवः ।
प्रदक्षिणीकृत्य जयाय सृष्टया, रराज नीराजनया स राजघः ॥ १ ॥"

५ हे अदते ! [2]"दो दाने पूजने क्षीणे" इत्याद्युक्तत्वात् न दा-न क्षीणा प्रोद्भूता तिः—पूजा यस्य सः अदतिः, तत्सम्बोधनं हे अदते ! । इति पञ्चपरमेष्ठिन आश्रित्यार्था उक्ताः ॥ ८५ ॥

अथ पुनरपि प्रकारान्तरेण श्रीआदिदेव १ श्रीशान्तिनाथ २ श्रीनेमिनाथ ३-श्रीपार्श्वनाथ ४ श्रीमहावीराभिध ५ तीर्थङ्करपञ्चकसञ्जातपञ्चतीर्थीमाश्रित्यार्था लिख्यन्ते ।
१० तत्र प्रथमं श्रीआदिदेववर्णनमाह—

## र ! अज ! (अ!) न ! उत् अद ! ते सौख्यम् ॥ ८६ ॥

अजो-ब्रह्मा पङ्क्तिरथन्यायेन नाभिभूः । तथा त्वमपि नाभिभूः, नाभिनाम-नृपजातत्वात्, तत्सम्बोधनं हे अज !-हे श्रीआदिदेव ! ते-तव उत्-भाषा अर्थाद् व्याख्यानध्वनिः सौख्यं सौख्यहेतुरित्यर्थः । हे र ! "रः सूर्येऽग्नौ धने कामे" इति १५ विश्वशम्भुवचनात् हे सूर्य !, भव्यजीवराजीवराजीनां विकासहेतुत्वात् । पुनः हे अ ! "अः स्यादर्हति सिद्धे च" इति वचनात् हे अर्हन् ! । पुनः हे न ! "नः पुनर्बोधबुद्धयोः" इति वचनात् हे बुद्ध !-हे अवगततत्त्व ! । पुनः हे अद ! "अः शिवे केशवे वायौ, ब्रह्मच-न्द्राग्निसानुषु" इति विश्वशम्भुवचनात् अः-ब्रह्मा अग्निर्वा तद्वत् "दो दाने पूजने क्षीणे, दानशौण्डे च पालके । देवे दीप्तौ" इति विश्वशम्भुवचनाद् दो-दीप्तिर्यस्य सोऽदः २० पीतवर्णत्वात् आदिदेवस्य तत्सम्बोधनं हे अद ! ॥

नन्वत्र चतुस्त्रिंशदतिशयसङ्ग्राहकातिशयचतुष्टयमध्ये कोऽतिशयः केन पदेनोच्यते सूच्यते वा इत्यभिधीयते । उदिति पदेन वचनातिशयः सूचितः ॥१॥ तथा 'अ' इति पदेन च पूजातिशयः । 'अ' इति पदस्य अर्हति चतुःषष्टिसुरेन्द्रकृतां पूजामिति अर्हन्निति पर्याय-व्युत्पत्तेः ॥ २ ॥ तथा नेति पदेन च ज्ञानातिशयः ॥३॥ स चापायापगमातिशयमन्तरेण न २५ सम्भवति । अतो ज्ञानातिशयेन अपायापगमातिशयोऽप्याक्षिप्तः ॥ ४ ॥ इति अतिशय-चतुष्टयमपि अत्रेदं ज्ञेयम् । इति आदिदेववर्णनेन प्रथमोऽर्थः ॥ ८६ ॥

## रा-अजा नो ददते असौ खी अम् ॥ ८७ ॥

अजं-मेषं मेषराशिं अटति-गच्छति इति अजाः-शान्तिः, मेषराशित्वात् । ततः

---

१ सोमसौभाग्येऽपि (स० १, श्लो० ३५)—

३० "राजन्ति यत्र जिनराजगृहेषु पञ्च-वर्णोज्ज्वलमणिमयबहुतोरणानि ।
एनोजयाद् विजयलक्ष्मिभृतस्य धर्म-भूपस्य मङ्गलकृते किमु सज्जितानि ॥"

२ एतद् विश्वशम्भुवचनम् ।

रा–श्रीः तत्पूर्वकः अजाः श्री(रा)अजाः–श्रीशान्तिः असौ–एषः अं–परब्रह्म नः–अस्माकं वदते। किं०? खी–ज्ञानवान्, केवलज्ञानवानित्यर्थः। इति द्वितीयोऽर्थः। सर्वे ॥ ८७ ॥

### र! अज अ! नो अद्! दत! इसौख्यम् ॥ ८८ ॥

हे अ!–हे अर्हन्! त्वं इसौख्यं–कामसुखं अज–क्षिप, वैराग्यदेशनादानेन दूरीकुरु इत्यर्थः। यतस्त्वं किंभूत? साक्षात् र!–सूर्य! केवलज्ञानेन जगत्प्रकाशकारित्वात्। हे ५ अद्! अस्य–कृष्णस्य दः–पूजनं यस्मिन् यस्य वा सः अदः; अथवा अवत्–कृष्णवत् दो–दीप्तिर्देहद्युतिर्यस्य सः अदः, कृष्णवर्णत्वात् 'विशेषणाद् विशेष्यप्रतीति'रिति न्यायात् श्रीनेमिः तत्सम्बोधनं हे अद!–हे श्रीनेमे!। पुनः हे दत! दैः–देवैः ता–श्रीः–शोभा यस्य स दतः, जघन्यतो देवकोटीसेव्यत्वात्, तत्सम्बोधनं हे दत!। किं० त्वम्?। नो–बुद्धः–अवगततत्त्वः। इदं श्रीनेमिप्रभोरग्रे वैराग्यदेशनां शुश्रूषूणां यदूनां वचनम्। इति तृती- १० योऽर्थः। सर्वे ॥ ८८ ॥

### रा-आजा नो अददत ईसौख्यम् ॥ ८९ ॥

रा–पर्यायेण श्रीः। "अः शिवे केशवे वायौ" इति विश्वशम्भुवचनाद् अं–वायुं अजति–क्षिपति धातूनामनेकार्थत्वात् भक्षतीति अचि आजः–सर्पस्तेन आ–शोभा यस्य स आजाः। श्री(रा)पूर्वकः आजाः श्री(रा)आजाः–श्रीपार्श्वनाथः, सर्पलाञ्छनात्। स नः–१५ अस्माकं ईसौख्यं अददत। इति चतुर्थोऽर्थः। सर्वे ॥ ८९ ॥

### रा-ज! अना-उत्-अत् अत ईसौख्यम् ॥ ९० ॥

"रा रमा रमणी बाला" इति वचनात् रा–कन्या तत्पर्यायत्वात् कन्याराशिस्तत्र जो–जातो राजः–श्रीमहावीरः, कन्याराशिजातत्वात्, तत्सं० हे राज!–हे श्रीवीर! त्वं ईसौख्यं अत–गच्छ। किं० (त्वम्)? अना–निरवद्या उत्–भाषा तां अततीति अनोदत्। २० इति पञ्चमोऽर्थः। इति जैनमतप्रसिद्धपञ्चतीर्थीमाश्रित्यार्थाः प्रदर्शिताः। जाताः सर्वेऽपि ॥ ९० ॥

अथ पुनरपि प्रकारान्तरेण जैनमतप्रसिद्धान् कतिचिज्जिनानाश्रित्यार्थाः प्रदर्श्यन्ते—

### रा आऽजानोऽत्! अद्! ते आसौख्यम् ॥ ९१ ॥

आं–ब्रह्माणं अजति–देवत्वेन गच्छति, तं श्रयतीत्यर्थः इति आजं तादृशं यदनः–२५ शकटं रोहिणीत्यर्थः। तथाच प्रयोगः—'उदेष्यति शकटं कृत्तिकोदयात्'। शकटे अन इति नाम च स्यात् तदाकारत्वात्। आजत्वं च ब्रह्मसेवकत्वात्। यदुक्तम्—"ब्राह्मी तु रोहिणी" इति (अभि० का० २, श्लो० २३)। तत आजानः–रोहिणीनक्षत्रं तत् अतति–

---

१ 'असौख्यम्' इति अर्थान्तरे।

तत्र आतत्वेन गच्छतीति आजानोऽत्-श्रीअजितनाथो द्वितीयो जिनः, रोहिणीनक्षत्रजातत्वात्। ततः हे आजानोत्! ते-तव रा-शोभा, भवत्विति शेषः। हे अद! अः-अग्निस्तद्वत् दो-दीप्तिर्यस्य सोऽदः, पीतवर्णत्वात् अजितस्य। हे आसौख्य! आ-सामस्त्येन सौख्यं-सुखं यस्मादसौ आसौख्यः, तत्सं० हे आसौख्य! चित्रत्वादनुस्वारलोपो न दोषाय।
५ तथा अत्र ते आसौख्यम् इत्यत्राकारलोपः। 'एदोतः पदान्तेऽस्य लुग्' (सिद्ध० अ० १, पा० २, सू० २७) इत्यनेन सूत्रेण मतान्तरमाश्रित्य यथा कुमारसम्भवे महाकाव्ये—"बन्धुप्रियां बन्धुजनो [आ]जुहाव तां पार्वतीत्याभिजनोऽऽजुहाव"। महाभारतेऽपि—"कुरवोऽऽत्महितं मन्त्रम्"। अन्यत्रापि—"निर्मापितोऽऽमराज्ञा, गोपगिरौ जयति वीरजिनः"। एवमनेकशः स्थलानि विलोकनीयानि। अथवा हे असौख्य! न विद्यते सौख्यं-
१० सांसारिकसुखं यस्य सः असौख्यस्तत्सं० हे असौख्य! इति। द्वितीयजिनवर्णनमाश्रित्यार्थ उक्तः। सर्वे ॥ ९१ ॥

## राजा नो ददते सौख्यम् ॥ ९२ ॥

राजा-चन्द्रस्तेनोपलक्षितः अः-अर्हन् राजा-चन्द्रप्रभजिनोऽष्टमः, चन्द्रलाञ्छनत्वात्। अथवा राजा-चन्द्रस्तेन लाञ्छनभूतेन आ-शोभा यस्य स राजा-चन्द्रप्रभो
१५ नः-अस्माकं सौख्यं ददते ॥ [2]८ ॥ सर्वे ॥ ९२ ॥

## रा-ज-आनः अददत इ सौख्यम् ॥ ९३ ॥

"रा रमा रमणी बाला" इति वचनात् पङ्क्तिरथन्यायेन रा-रामा ततो जं-जन्म यस्य स राजः-श्रीसुविधिः, रामामातृजातत्वात् तस्य आनो-मुखश्वासो राजानः। इ इति सम्बोधने। सौख्यं-मनःसन्तोषं अददत, ददौ इत्यर्थः। इदं बाल्यावस्थायां खेलना-
२० दिसमये रामामात्रादिजनवचनम् ॥ ९ ॥ सर्वे ॥ ९३ ॥

## रा जानो! ददते सौख्यम् ॥ ९४ ॥

आ-लक्ष्मीस्तत्पर्यायत्वात् या। ततः जपूर्वा आ जाआ, जाया इत्यर्थः। ततो जायानाम्नी वासुपूज्यमातेत्यर्थः। तस्याः "नुः स्तुतौ" इति वचनात् नुः-स्तुतिर्यस्मात् स जानुः-श्रीवासुपूज्यः। उत्तमपुत्राद्धि मातापित्रोः स्तुतिर्लोके भवत्येव। ततस्तत्सं० हे
२५ जानो!-हे श्रीवासुपूज्य! भवानिति अध्याहारे। सौख्यं ददते। किं० भवान्? 'राः' "रं जले रङ्गवेगयोः" इति (विश्व०)वचनात् रं-रङ्गं अटति-गच्छति-प्राप्नोतीति राः ॥ १२ ॥ सर्वे ॥ ९४ ॥

---

१ निर्णयसागरमुद्रणालये मुद्रिते पुस्तके (स० १, श्लो० २६) तु निम्नलिखितः पाठः—
"तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव।"

३० २ अष्टमतीर्थङ्करसूचकोऽङ्कोऽयम्।

रा-अज-अः नो ददते असौ खी अम् ॥ ९५ ॥

रा–श्रीः अः–विष्णुः, सदृशनामत्वात् श्रेयांसपिता। राजाऽपि विष्णुः, तस्मात् जो–जातोऽजः, (रया–) श्रिया उपलक्षितोऽजः श्री(रा)अजः–श्रीश्रेयांसः स चासौ अः–अर्हन् राजाः–श्रीश्रेयांसतीर्थकृत्। असौ–अयं नः–अस्माकं अं–परब्रह्म ददते। किं०? 'खी' खे–सुखे परमानन्दरूपे तिष्ठतीत्येवंशीलः खी ॥ १३ ॥ सर्वे ॥ ९५ ॥

र-आ-ज-अः नः! ददते सौख्यम् ॥ ९६ ॥

"रश्च[1] कामे तैक्ष्ण्ये विश्वानरे नरे ॥ रामे वज्रे च शब्दे स्यात्" इति सुधाकलश-(श्लो० ३६–३७)वचनात् रेण–वज्रेण लाञ्छनभूतेन आयाः–श्रियाः। "जस्तु जेतरि जमने" इति विश्वशम्भुवचनात् जो–जमनं यस्य स राजः–श्रीधर्मनाथो जिनः, वज्रलाञ्छनत्वात्। ततो राजश्चासौ अश्च–अर्हन् राजाः। हे नः!–हे नर! सौख्यं–सुखं ददते ॥ १५ ॥ सर्वे ॥ ९६ ॥

र! अजाः! नोदत्! अतेः सौख्यम् ॥ ९७ ॥

हे र!–हे नर! अजेन–छागेन लाञ्छनभूतेन आ–श्रीः यस्य सः अजाः–श्रीकुन्थुनाथः, छागवाहनत्वात् तत्सं० हे अजाः! त्वं सौख्यं अतेः–गच्छेः। किं०? 'नोदत्!' नो–न दत्!–क्षयकृत्! प्राणिनामिति शेषः, षड्जीवनिकायवत्सलत्वात् 'दसू [ष्] दसूच् उपक्षये' (सिद्ध० धातुपाठे) क्विपि रूपम्। चित्रादित्वात् विसर्गलोपो न दोषाय ॥१७॥ सर्वे ॥९७॥

रा-ज-अः नो ददते असौख्यम् ॥ ९८ ॥

रा–पङ्क्तिरथन्यायेन पद्मा ततो रायां–पद्मायां पद्मानाम्न्यां मातरि जो–जातो राजः स चासौ अः–अर्हन् राजाः–श्रीमुनिसुव्रततीर्थकृत् असौख्यं नो–न ददते ॥ २० ॥ सर्वे ॥ ९८ ॥

अथ पुनः प्रकारान्तरेण विविधानर्थानाह—

राजा अः नो ददते सौख्यम् ॥ ९९–१०० ॥

"अः स्यादर्हति सिद्धे च" इति वचनात् अः–सिद्धो नः–अस्माकं सौख्यं ददते। किं० अः? 'राजा' राजते–सिद्धिशिलायां दीप्यते इति राजा। इदं संसारविरक्तजनवचनम्। एवं असौख्यं ददते। इदं संसारासक्तिरक्तनरवचनम्। शेषं सर्वं पूर्ववत्। इत्यर्थद्वयम्। सर्वमीलने ॥ १०० ॥

रा जा नो ददते असौख्यम् ॥ १०१–१०२ ॥

जायते इति जा–पुत्री। 'क्वचित्' (सिद्ध० अ० ५, पा० १, सू० १७१) डप्रत्यये

---

1 'रः कामी तीक्ष्णे वैश्वानरे नरे' इति पाठान्तरम्।

जा अग्रे 'डुमिंग्ट् प्रक्षेपणे' ( सिद्ध० धातुपाठे ) जां मिनोति इति जामाता । [1]"जाया सिगः तृप्रत्ययः" । 'मिग्मीगः०' ( सिद्ध० अ० ४, पा० २, सू० ८ ) इत्याकारः इति न्यासकारकृतव्युत्पत्तिदर्शनात् जा–पुत्री नः–अस्माकं असौख्यं ददते । यतः किं० ? 'रा' रं–कामं अटति–अतति–गच्छतीति रा, कामाकुला इत्यर्थः । इदं कामाकुलत्वेन प्रकटी-

५ कृतविकारे पितॄणां वचनम् ॥ १ ॥ एवं जा–पुत्री नो–न असौख्यं ददते, सौख्यं ददते इत्यर्थः । यतः किं० जा? 'रा' राजते षोडशशृङ्गाररचितवेषत्वेन सुन्दरदर्शनात् इति रा । इदं परहितावगुण्ठितनिजपुत्रीदर्शने जातसुखस्य पितुर्वचनम् ॥ २ ॥ सर्वे ॥ १०२ ॥

## रा अ-जा नः ददते सौख्यम् ॥ १०३–१०४ ॥

न विद्यते जा–पुत्री यस्यां सा अजा, एवंविधा रा–रमणी नः–अस्माकं सौख्यं ददते

१० ॥ १ ॥ एवं हे नः!–नर! ममेति शेषः । असौख्यं ददते । इदमनिष्टेष्टपुत्रीदर्शनयोः पित्रोर्वचनम् ॥ २ ॥ अन्यथा वा स्वयमर्थयोजना कार्या ॥ २ ॥ १०४ ॥

## रा-जा-आ नो ददते सौख्यम् ॥ १०५–१०६ ॥

"रा रमा रमणी बाला" इति ( विश्व० )वचनात् रा–रमा–लक्ष्मीः सा जा–पुत्री यस्य स राजः–समुद्रः, तज्जनकत्वात् । तस्य आ–शोभा राजा नः–अस्माकं सौख्यं ददते ।

१५ इदं तदधिकारिदेवानां वचनम् ॥ १ ॥ एवं राजा–समुद्रशोभा हे नः!–हे नर! असौख्यं ददते । इदं अगस्तेर्वचनम् ॥ २ ॥ सर्वे ॥ १०६ ॥

## रा-जा-अ नो ददते सौख्यम् ॥ १०७–१०८ ॥

रा–बाला–कन्या जा–पुत्री यस्याः सा राजा तां अटति–गच्छतीति राजाः एवंविधः कोऽपि जनः नः–अस्माकं सौख्यं असौख्यं च ददते । अर्थयोजना स्वयं कार्या ॥२॥१०८॥

२० ## रा! जा-अनः ददते सौख्यम् ॥ १०९–११० ॥

जा–पुत्री तत्क्रीडार्थं अनः–शकटं जानः । हे राः!–हे नराः । ममेति शेषः, सौख्यं ददते असौख्यं च ददते । इदं लघुशकटिकाक्रीडमाननिजपुत्रीप्रेमाप्रेमवतोः पुंसोर्वचनम् ॥ २ ॥ सर्वे ॥ ११० ॥

## राय् जा-आनः ददते सौख्यम् ॥ १११ ॥

२५ जायाः–पुत्र्याः आनो–मुखश्वासो जानः, ममेति शेषः, सौख्यं ददते । किं० जानः? 'राय्' रस्य–हर्षस्य आयं–प्राप्तिं करोतीति राय् । णिजादिविधानेन रूपसिद्धिः पूर्ववत् । 'य्वोः' ( सिद्ध० अ० १, पा० ३, सू० २३ ) इति सूत्रेण यलोपोऽपि पूर्ववत् । इदं वल्लभ-पुत्रीकस्य पितुर्हुलापनसमये वचनम् ॥ १११ ॥

---

[1] 'जायास्तत्र सिगः' इति ख–पाठः ।

**रा अ-जा नो ददते असौख्यम् ॥ ११२ ॥**

अस्य-कृष्णस्य जा-पुत्री अजा नो-न ददते असौख्यं, ममेति शेषः[1]। किं० ? 'रा' राजते-शोभते इति रा-शोभमाना। अर्थयोजना स्वयं कार्या ॥ ११२ ॥

**रा आ-जा नो ददते सौख्यम् ॥ ११३ ॥**

आ-ब्रह्मा तस्य जा-पुत्री आजा-सरस्वती नः-अस्माकं सौख्यं ददते। किं० आजा ? 'रा' शोभमाना ॥ ११३ ॥ ५

**राजा अः नः ददते सौख्यम्* ॥ ११४–११५ ॥**

"अः कृष्णः" इति श्रीअमर(कवि)वचनात् अः-श्रीकृष्णो नः-अस्माकं सौख्यं ददते। किं०? 'राजा' स्वामी। इदं वैष्णवं वचः ॥ १ ॥ एवं असौख्यं ददते। इदं कालनेमि-हयग्रीव-शकटादिदैत्यानां वचनम् ॥ २ ॥ ११५ ॥ १०

**राजा (राऽजा) अ-आ नः ददते सौख्यम्* ॥ ११६–११७ ॥**

अस्य-कृष्णस्य आ-शोभा नः-अस्माकं सौख्यं ददते। किं०? 'राजा' राजते इति अचि आपि च राजा। सुन्दरेत्यर्थः। अथवा विशेषणद्वयं पृथक् रा-शोभमाना। पुनः किं०?। अजा न आयत इत्यजा-शाश्वती, न तु अन्यजनशोभेव कृत्रिमा। इदं यशोदादीनां वचनम् ॥ १ ॥ एवं असौख्यं ददते। शेषं सर्वं पूर्ववत्। इदं कृष्णवैरिणां वचनम् ॥ २ ॥ ११७ ॥ १५

**राजा आ नो ददते सौख्यम्* ॥ ११८–११९ ॥**

"आः स्वयम्भूः" इति (विश्व० श्लो० ५) वचनात् आः-श्रीब्रह्मा नः-अस्माकं सौख्यं-सुखं ददते। किं० आः? 'राजा' स्वामी। एवं असौख्यं-दुःखं ददते। शेषं पूर्ववत्। इदं विधिभक्ताभक्तजनवचनम् ॥ ११९ ॥ २०

**राजा आ-आ नो ददते सौख्यम्* ॥ १२०–१२१ ॥**

आ-ब्रह्मा तस्य आ-शोभा नः-अस्मभ्यं सौख्यं असौख्यं (वा) ददते। किं०? 'राजा' सुन्दरा। शेषं पूर्ववत्। अर्थयोजना स्वयं कार्या ॥ १२१ ॥

**राजा अः नो ददते सौख्यम्* ॥ १२२–१३१ ॥**

"अः शिवे केशवे वायौ, ब्रह्मचन्द्राग्निभानुषु[4]" इति विश्वशम्भु(श्लो० ५)वचनात् २५ अः-ईश्वरः सौख्यं असौख्यं च ददते। किं०? 'राजा' शोभमानः। शेषं पूर्ववत्। इदं

---

१ 'ममेति शेषः' इत्यधिकः क-पाठभिन्नतीयः; तथापि सम्भवन्नेव् सरस्वती नो-न असौख्यं ददते इति पाठः।

* अनेन चिह्नेन सूच्यते यदुत 'असौख्यं' इति संयोजना कार्याऽर्थान्तरे।

२-३ 'आ नः' इति क-पाठभिन्नतीयः। ४ 'सानुषु' इति प्रत्यन्तरे।

माहेश्वराणां गजवृषादीनां वचनम् ॥ २ ॥ एवं वायु-ब्रह्म-चन्द्रा-ऽग्निवाचकेनापि अशब्देन समं द्वौ द्वौ अर्थौ पृथक् पृथक् कार्यौ । जाता अष्टौ ॥ ८ ॥ पूर्वोक्तद्वयमीलने जाताः ॥ १० ॥ सर्वे० ॥ १३१ ॥

## रा-अः जाः ! नो ददते असौ खी अम् ॥ १३२–१३६ ॥

५ रा–श्रीः अः–कृष्णः । रया–श्रिया उपलक्षितः अः राः–श्रीकृष्णः । "जस्तु जेतरि" इति वचनात् हे जाः !–हे जेतारः पुरुषाः ! असौ–प्रत्यक्षः अं–परब्रह्म नो–न ददते ? अपि तु ददते इति काक्वा व्याख्येयम् ॥१॥ किं० ? 'खी' ज्ञानवान् सुखवान् वा । एवं अर्हत्१सिद्ध२शिव३वाचकेनापि अशब्देन समं अर्थत्रयं कार्यम् । पूर्व(१)मीलने ॥ ४ ॥ सर्वे० ॥ १३५ ॥

१० एवं ब्रह्मवाचकेन अशब्देनापि समं अनयैव रीत्या एकोऽर्थः कार्यः । सर्वे० ॥१३६॥

## र-अजाः नो ददते सौख्यम्* ॥ १३७–१३८ ॥

अजन्ति–क्षिपन्तीति अचि अजाः–क्षेपकाः । रस्य–कन्दर्पस्य अजाः–क्षेपकाः राजा विशेषणाद् विशेष्यप्रतीतिरिति न्यायात् ईश्वराः । बहुवचनं च ईश्वरस्य बहुत्वख्यापनार्थम् । यदुक्तं ( महादेवस्तोत्रे श्लो० ३४ )—"क्षितिजलपवनहुताशने"त्यादि । नः–
१५ अस्माकं सौख्यं असौख्यं च ददते । इदं तद्भक्ताभक्तजनवचनम् ॥ २ ॥ सर्वे० ॥ १३८ ॥

अथ पुनरपि प्रकारान्तरेण अर्थानाह—

## राजा नो ददते सौख्यम्* ॥ १३९–२०४ ॥

राजा–नृपतिः नः–अस्मभ्यं अस्माकं ( वा ) सौख्यं–सुखं ददते । इदं सुरक्षितप्रजावचनम् ॥२॥ राजा–नृपतिर्नो–न सौख्यं ददते प्रजानामित्युक्तिसामर्थ्याद् गम्यते । इह केन-
२० चिद् वैदेशिकेन कीदृगत्र राजेति पृष्टः कोऽपीदमुवाच । अत्र नो प्रतिषेधको ज्ञेयः । यदवाचि एकाक्षर्यां "अमानोनाः प्रतिषेधे" इति । एवमग्रेऽपि सति प्रयोजने स्मर्तव्यम् ॥३॥ राजानो–नृपाः सौख्यं ददते, जनानामिति शेषः । एवमग्रेऽपि अर्थसामर्थ्यात् स्वेप्सितशेषशेषशब्दाकर्षः कर्तव्यः । अत्र नामक्रियाबहुवचनकृतोऽर्थभेदः ॥ ४ ॥

शतार्थिकृतां शास्त्रादौ अपि क्वचित् क्वचित् नामवचनभेदात् क्वचित् क्वचित् क्रिया-
२५ वचनभेदात् क्वचित् क्वचित् काकुवचनभेदाच्च अर्थभेदो दृश्यते ततोऽत्र बहु(र्थ)करणे को दोषः ? । एतत् तु सर्वं अत्रैव ग्रन्थान्ते वक्ष्यते । एवमेते चत्वारोऽप्यर्थाः काकुवचनेनापि कार्याः । यथा—राजा–नृपतिः नः–अस्मभ्यं सौख्यं ददते ? अपि तु न ददते । इत्यादि पूर्वरीत्या कर्तव्याः । जाताः ॥ ८ ॥

एते पुनरपि अष्टावप्यर्थाः असौख्यशब्देन समं योज्यन्ते ॥ यथा—राजा–
३० नृपतिः नः–अस्मभ्यं असौख्यं ददते । इदं करनिकरनिपीडितप्रजावचनम् । इत्यादि पूर्व-

१ 'एतयैव' इति ग-घ-पाठः ।

वत् कार्याः । व्युत्पत्तिरपि पूर्ववत् । अर्थयोजना तु यत्र न कृता भवति तत्र सर्वत्र सुधीभिः स्वयं कार्या । मया विस्तरभयान्न लिख्यते । सर्वे० ॥ १६ ॥

एते १६ अर्थाः नृपवाचकराजन्शब्दस्य जाताः । एवं चन्द्रवाचिराजन्शब्दस्याप्येते १६ अर्थाः कार्याः । यथा—राजा–चन्द्रो नः–अस्मभ्यं सौख्यं ददते । इदं संयोगिन्याः स्त्रियाः चकोरस्य वा वाक्यम् । इत्यादि पूर्वविधिना ज्ञेयाः । अर्थयोजना स्वयं कार्या । ५ जाताः ॥ ३२ ॥

एवं यक्षवाचिराजन्शब्दस्याप्येतेऽर्थाः (१६) कार्याः। यथा—राजा–यक्षो नः–अस्मभ्यं सौख्यं ददते । इदं यक्षभक्तजनवचनम् । इत्यादि पूर्वविधिना कार्याः । जाताः ॥ ४८ ॥ अत्र राजन्शब्दो यक्षवाचको ज्ञेयः । यदवाचि श्रीकालिदासकविना—

"तस्य स्थित्वा कथमपि पुरः [1]केतकाधीनहेतो- १०
रन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ।
मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ? ॥ १ ॥"
—मेघदूते ( पू० श्लो० ३ )

इति । अर्थाः ॥ ४८ ॥ १५

एवं यमवाचिराजन्शब्दस्याप्येतेऽर्थाः कार्याः । यथा—राजा–यमो नः–अस्मभ्यं सौख्यं ददते । इदं यमभक्तसेवकवचनं कविसमयमाश्रित्य । अथवा मरणसमये अतिदुःखिजनवचनं इत्यादि पूर्वविधिना ज्ञेयाः । अर्थयोजना स्वयं कार्या । जाताः ॥६४॥ पूर्वोक्त–३८ (?) मीलने जाताः ॥ १०४ ॥ अर्थाः । सर्वमीलने च जाताः ॥ २०४ ॥

## राजा अनः ददते सौख्यम्* ॥ २०५–२२० ॥ २०

राजा–नृपतिः सौख्यं ददते । किं० राजा? 'अनः' "नः पुनर्बन्धबुद्धयोः" इति वचनात् न विद्यते बन्धो–बन्धनं यस्मात् यस्य यस्मिन् वा सोऽनः ॥ १ ॥ इदं धर्मिष्ठजनवचनम् । एवं राजा–नृपोऽसौख्यं ददते । किं० राजा? 'अनः' बन्धनरहितः । व्युत्पत्त्यादि पूर्ववत् । इदं पापिष्ठवचनम् ॥ २ ॥ राजा–नृपः सौख्यं ददते, ममेति शेषः । किं०? 'अनः' नो–बुद्धः न नः अनः मूर्ख इति यावत् । इति मूर्खवचनम् । यतो हि २५ सदृशाः सदृशैः समं राजन्ते । यदुक्तम्—

"[2]हंसा रज्जंति सरे, भमरा रज्जन्ति केतकीकुसुमे ।
चन्दणवणे भुअंगा, सरिसा सरिसेण रज्जंति ॥ १ ॥"

इत्यादि ॥ ३ ॥

---

१ 'कैतकाधानहेतोः', 'केतकाधानहेतोः' इति वा पाठः । ३०

२ छाया—

हंसा रज्यन्ति सरसि भ्रमरा रज्यन्ति केतकीकुसुमे ।
चन्दनवने भुजङ्गाः सदृशाः सदृशेन रज्यन्ति ॥

राजा-नृपः असौख्यं ददते । किं०? 'अनः' मूर्खः । इदं पण्डितस्य राजसेवकस्य वचनम् । यतो हि मूर्खो राजा दुःखेन आराध्यते । यदुक्तम् (श्रीभर्तृहरिमहर्षिभिः)—

शक्यो वारयितुं जलेन दहनश्छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदं दण्डेन गोगर्दभम् ।
५ व्याधिर्भेषजसङ्ग्रहेण विविधैर्मन्त्रैः प्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ १ ॥"
—(नीतिशतके श्लो० १०)

इत्यादि ॥४॥ राजा-नृपः सौख्यं ददते । ममेति शेषः । किंविशिष्टो राजा? । 'अनः' न विद्यन्ते नाः-नराः-अर्थान्निजनिकटवर्तिसेवका यस्य सोऽनः, रतकृते एकाकी इत्यर्थः । १० इदमन्यजनलज्जमाननवोढावचनम् । अत्र नशब्दो नरवाचकः । यदुक्तमेकाक्षर्यां (श्लो० ७६) विश्वशम्भुना-"नो नरे च सनार्थे(थे) च नोऽनर्थेऽपि प्रदर्श्यते(र्शने)" इति । इदमग्रेऽपि सर्वत्रानुसरणीयम् ॥५॥ राजा-नृपोऽसौख्यं ददते । प्रजानामिति शेषः । किं० राजा? 'अनः' नररहितः, एकाकीत्यर्थः । एकाकी हि राजा विपक्षान् निराकृत्य प्रजासुखदाने न समर्थो भवेदित्यर्थयोजना । इदं विपक्षलक्षपीड्यमानवचनम् ॥६॥ राजा-नृपः सौख्यं ददते । १५ किं० राजा? । 'अनः' न विद्यते नः-अनर्थो यस्मात् यस्य यस्मिन् वाऽसौ अनः । इदं नीतिवाक्यम् ॥ ७ ॥ राजा-नृपः असौख्यं ददते । किं० राजा? 'अनः' अनर्थरहितः । इदमनर्थप्रियजनवचनम् ॥ ८ ॥ एते अष्टावप्यर्थाः काकुवचनेनापि समं कार्याः । यथा राजा सौख्यं ददते? अपि तु न ददते । किं०? 'अनः' बन्धरहितः । इत्यादिप्रकारेण पूर्ववत् कार्याः । अर्थयोजनाऽपि स्वयं कार्या सर्वत्र । जाताः ॥ १६ ॥ पूर्वोक्त २०४-२० मीलने च जाताः सर्वेऽपि ॥ २२० ॥

## राजाऽऽनः ददते सौख्यम्* ॥ २२१-२२४ ॥

राज्ञां राज्ञो वा आनः-मुखश्वासः सौख्यं ददते । इदं सम्भोगसमये रामावचनम् ॥ १ ॥ राजानो-राजमुखश्वासोऽसौख्यं ददते । इदं रतसमये रुष्टरामावचनम् ॥ २ ॥ राज्ञां राज्ञो वा आनः-प्राणो राजानः सौख्यं १ असौख्यं २ ददते । इत्यादिप्रकारेण अर्थद्वयं २५ कार्यम् । अर्थयोजना स्वयं कार्या । जाताः ॥ ४ ॥ पूर्वोक्तसर्वमीलने जाताः ॥ २२४ ॥

## राज-आ-नः ददते अः सौखी अम् ॥ २२५-२२८ ॥

"अः स्यादर्हति सिद्धे च" इति वचनात् अः-श्रीअर्हन्-जिनः अं-परब्रह्म ददते । जिनभक्तिभाजामित्यर्थः (ति शेषः?) । किं० अः? 'राजानः' राजते इति अचि राजं, एवं(विधं) आ इति अतिशयितं नं-ज्ञानं यस्य स राजानः । पुनः किं०? 'सौखी' सुखानां-३० परमानन्दरूपाणां समाहारः सौखं, तदस्यास्तीति सौखी । परमानन्दमय इत्यर्थः ॥ १ ॥ एवं

१ 'अष्टाऽप्यर्थाः' इति ग-घ-पाठः ।

शिव१केशव२सिद्ध३वाचकेनापि अशब्देन समं पृथक् पृथक् अर्थत्रयं कार्यम् । जाताः ॥ ४ ॥ अत्र चित्रादित्वाद् विसर्गाभावभावौ न दोषाय । यदुक्तं रुद्रटालङ्कारटीकायां नमिसाधुना—

"विसर्जनीयाभावभावयोर्न विशेषः ।"

यथा— ५

"द्विषतां मूलमुच्छेत्तुं, राजवंशादजायथाः ।
द्विषन्नयस्त्यसि कथं, वृकयूथादजा यथा ॥ १ ॥"

इत्यादि । सर्वमीलने ॥ २२८ ॥

## राजा अनः ददते सौख्यम्[*] ॥ २२९–२३२ ॥

राजा–नृपः अनः–शकटं ददते । सेवकानामिति शेषः । किं० अनः? 'सौख्यं' १० सौख्यहेतुत्वात् सौख्यकारकत्वात् वा, कारणे कार्योपचारात् सौख्यम् । राज्ञां हि स्वसेवकेभ्यः सुखकारिशकटादिभिरपि अवष्टम्भदानयोग्यत्वात् ॥ १ ॥ राजा–नृपः अनः–शकटं ददते । किं०? 'असौख्यं' न विद्यते सौख्यं यस्मात् तदसौख्यम् । असौख्यकारकमित्यर्थः । अभक्तसेवकानां एवंविधस्यैव शकटादेर्दानयोग्यत्वात् ॥ २ ॥ एवं काकुवचनेनापि समं अर्थद्वयं कार्यम् । यथा राजा–नृपः शकटं ददते? अपि तु न । किं० अनः? 'सौख्यं' १५ सौख्यकारकम् । व्युत्पत्त्यादि पूर्ववत् । जाताः ॥ ४ ॥ सर्वे ॥ २३२ ॥

## रां जा! नः ददते असौख्यः ॥ २३३–२४० ॥

नः–बुद्धः अवगततत्त्वः रां–लक्ष्मीं ददते । हे जाः!–हे जेतारः! पुरुषाः! किं० नः? 'असौख्यः' आत्–अर्हतः सौख्यं यस्य सः असौख्यः, जैन इत्यर्थः । इदं जैनपुरुषान् प्रति केषाञ्चिद् वचनम् ॥ १ ॥ एवं आत्–कृष्णात् सौख्यं यस्य सः असौख्यो–वैष्णवः ॥२॥ २० तथा आत्–ईश्वरात् सौख्यं यस्य सः असौख्यः–माहेश्वरः ॥ ३ ॥ तथा आत्–सिद्धात् सौख्यं यस्य सः असौख्यः–सिद्धभक्तः ॥४॥ एवं आत्–वायोः वायुदे(दै?)वताद् वा सौख्यं० असौख्यः–वाताभिलाषी वायुदेवताभक्तो वा ॥ ५ ॥ तथा आत्–ब्रह्मणः सौख्यं यस्य सः असौख्यः । यो हि ब्रह्मणः सकाशात् सौख्यं प्राप्नोति स एवंविधः ॥ ६ ॥ तथा आत्–चन्द्रात् सौख्यं यस्य सः असौख्यः । यस्य हि चन्द्रो देवः स एवंविध उच्यते ॥ ७ ॥ २५ तथा आत्–अग्नेः अग्निदेवात् सौख्यं यस्य सः असौख्यः–आग्नेयः ॥ ८ ॥ एतेऽष्टावप्यर्थाः जैनार्थवाचि असौख्यशब्दवत् पूर्ववत् कार्याः । यथा असौख्यो–वैष्णवो रां–लक्ष्मीं ददते । हे जाः!–हे जेतृपुरुषाः! । किं० अ०? 'नो' बुद्धोऽवगततत्त्वः इत्यादि अर्थयोजनाऽपि स्वयं कार्या । जाताः ॥ ८ ॥ सर्वे० ॥ २४० ॥

---

१ रुद्रटकृतकाव्यालङ्कारटीकायाम् इत्यर्थः । २ 'अथवा असौख्यो–जैन इति कर्तृपदम्, किं० असौख्यः १० यो इ० (?) इत्यादि' पाठः क–पार्श्वे सूचितः ।

## रा अ-ज ! आं नो द‍्दते अ-सौख्य ! ॥ २४१ ॥

अः–कृष्णः तस्माज्जो–जातः अजः–कन्दर्पः तस्य सम्बोधनं हे अज! रा–लक्ष्मीः नः–अस्मभ्यं आं–लक्ष्मीं, सम्पदं ददते । किं० अज? 'असौख्य!' आत्–कृष्णात् सौख्यं यस्य सः असौख्यः, अथवा अस्य–कृष्णस्य सुखं यस्मात् सः असौख्यः । पुत्राद्धि ५ पितुः सुखं भवत्येवेति तत्सम्बोधनं हे असौख्य! । इदं कन्दर्पदेवं प्रति लक्ष्मीदेवतासेवकानां वचनम् ॥ १ ॥ २४१ ॥

## रा अज ! आ नो द‍्दते सौख्यम्* ॥ २४२–२४३ ॥

"एते चतुर्दशापि स्वराः पादपूरणभर्त्सनामन्त्रणनिषेधेषु" इति बृहच्छ्यासवचनात् आ इति आमन्त्रणे पादपूरणे वा । हे अज!–हे कन्दर्प! व्युत्पत्त्यादि पूर्ववत् । रा– १० लक्ष्मीदेवता नः–अस्माकं सौख्यं–सुखं ददते । इदमपि कन्दर्पं प्रति लक्ष्मीदेवतासेवकानां वचनम् ॥ १ ॥ एवं असौख्यं ददते । शेषं सर्वं उक्त्यादियोजनं पूर्ववत् । इदं रुष्टलक्ष्मीदेवताताडितरत्यादीनां वचनम् । अन्यथा वा यथा चेतसि चमत्कारता भवेत् तथा (योजना) कार्या ॥ २ ॥ सर्वमीलने ॥ २४३ ॥

## रा अ-ज ! आं नो द‍्दते अ-सौख्य ! ॥ २४४ ॥

१५ अः–शिवः ततो जं–जन्म यस्य सः अजः–ईश्वरपुत्रो–विनायकस्तत्सम्बोधनं हे अज! रा–लक्ष्मीदेवता नः–अस्मभ्यं आं–सम्पदं ददते । किं० हे अज? हे 'असौख्य'! आत्–ईश्वरात् सौख्यं यस्य सः, अथवा अस्य–शिवस्य सौख्यं यस्मात् सः असौख्यः तत्सं० हे असौख्य! । इदं विनायकं प्रति लक्ष्मीदेवतादीयमानसम्पदां लक्ष्मीसेवकानां वचनम् ॥ २४४ ॥

## २० रा अ-ज ! आ नो द‍्दते सौख्यम्* ॥ २४५–२४८ ॥

आत्–वायोः जो–जातः अजः–हनूमान् तत्सं० हे अज! आ इति सम्बोधने पादपूरणे वा । रा–लक्ष्मीदेवता नः–अस्माकं सौख्यं असौख्यं च ददते । इदं हनुमन्तं प्रति लक्ष्मीदेवतादीयमानसौख्यानां तत्सेवकानाम् (वचनम्)॥१॥ अस्थिरतासारत्वमहामोहोत्पादकादिदोषदर्शनेन समुत्पन्नविरक्तभावानां तत्त्यागिनां ऋषिप्रभृतीनां च वचनम् ॥२॥ एवं २५ आत्–चन्द्रात् जो–जातः अजः–बुधः इति व्युत्पत्त्या बुधवाचकेनापि अजशब्देन समं पूर्ववत् अर्थद्वयं कार्यम् । अर्थयोजनाऽपि स्वयं कार्या । जाताः ॥ ४ ॥ सर्वे० ॥ २४८ ॥

## राज ! अनोत् ! अत् ! अतेः सौख्यम् ॥ २४९–२५० ॥

अनः–शकटं तदाकारत्वात् "उदेष्यति शकटं कृत्तिकोदयात्" इति दर्शनात् अनो –रोहिणीं स्वयं अतति–गच्छतीति अनोत्–चन्द्रः तत्सं० हे अनोत्! त्वं सौख्यं अतेः– ३० गच्छेः । हे 'राज!' राजते–शोभते इति अचि राजः तत्सं० हे राज! । पुनः हे 'अत्!'

अतति–सततं गच्छति अम्बरतले इति क्विपि तद्गुकि च अत् तत्सं० हे अत्! । चित्रादित्वात् अत्र विसर्गलोपो न दोषाय । इदं ज्योत्स्नापानप्रीणितचकोरवाक्यम् ॥ १ ॥ एवं काकाऽपि एकोऽर्थः कार्यः । यथा हे अनोत्!–हे चन्द्र! त्वं सौख्यं अतेः? अपि तु न अतेः इत्यर्थः । शेषं विशेषणादि पूर्ववत् । इदं चन्द्रकिरणनिकरनिपीडिताया वियोगिन्या वचनम् ॥ २ ॥ सर्वे० ॥ २५० ॥ ५

## राजा अ! आ नो ददते सौख्यम्* ॥ २५१–२५२ ॥

आ इति आमन्त्रणे । हे अ!–हे कृष्ण! राजा–चन्द्रः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । इदं रतसमये स्वप्रियनारायणेन समं रममाणगोपाङ्गनानां चन्द्रोद्योतप्रद्योतिते जगति स्वप्रियं प्रति वचनम् ॥ १ ॥ एवं हे अ!–कृष्ण! राजा–चन्द्रो नः–अस्मभ्यं १ अस्माकं २ वा आ इति पादपूरणे असौख्यं–कामपीडां ददते । त्वद्विरहे इति १० अर्थाद् गम्यम् । इदमपि गोपाङ्गनावचनम् ॥ २ ॥ सर्वे० ॥ २५२ ॥

## राजा अ! अ नो ददते सौख्यम् ॥ २५३–२५४ ॥

अ इति सम्बोधने । हे अ!–हे कृष्ण! राजा–यक्षो नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । अत्र हि द्वारिकातो बहिर्निर्गच्छता नारायणेन केऽपि यक्षाराधकाः पृष्टाः—यदुत भोः! कीदृग् यक्षः? । ततस्ते इदमाहुः ॥ २ ॥ सर्वे० ॥ २५४ ॥ १५

## राजा अ! अ नो ददते असौख्यम् ॥ २५५–२५६ ॥

अ इति पादपूरणे । हे अ!–हे कृष्ण! राजा–यक्षो नः–अस्मभ्यं १ अस्माकं २ वा असौख्यं उपद्रवरूपं ददते । इदं कोपियक्षोपद्रुतप्रजानां स्वस्वामिनं विष्णुं प्रति वचनम् । सर्वे० ॥ २५६ ॥

## राजा अ! अ नो ददते सौख्यम् ॥ २५७–२५८ ॥ २०

अ इति सम्बोधने । हे अ!–हे कृष्ण! राजा–यमो नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं अपहरणाभावरूपं ददते । त्वदीयप्रचण्डोद्दण्डप्रतापभीतो नः–अस्माकं भवदीयप्रजानां अपहरणं (न) करोतीत्यर्थः । इदं यमापरिभूतप्रजावचनं स्वस्वामिनं प्रति ॥२॥ सर्वे० ॥ २५८ ॥

## राजा अ! आ नो ददते असौख्यम् ॥ २५९–२६० ॥ २५

आ इति कोपे । हे अ!–हे कृष्ण! राजा–यमो नः–अस्मभ्यं १ अस्माकं २ वा असौख्यं ददते, अपहरणकरणात् । इदं कदाचित् समये कृतान्तोपद्रुतद्वारिकावासिलोकानां स्वस्वामिनं हरिं प्रति वचनम् ॥ २ ॥ सर्वे० ॥ २६० ॥

## राजा अ! अ नो ददते सौख्यम्* ॥ २६१–२६२ ॥

अ इति आमन्त्रणे । हे अ!–हे कृष्ण! राजा अर्थात् अन्यायी नृपः नो–न सौख्यं ३०

ददते ॥ २ ॥ तथा अ इति आमन्त्रणे । हे अ!–हे कृष्ण! राजा अर्थात्पापी नृपः नो–न असौख्यं ददते, प्रजानामिति शेषः । इदं नीतिवाक्यद्वयं व्याख्याने सदसि नीतिशास्त्रविदा केनापि कोविदेन श्रीकृष्णमुद्दिश्योक्तम् ॥ २ ॥ सर्वे० ॥ २६२ ॥

## राजा अ! अ नो ददते सौख्यम्* ॥ २६३–२६६ ॥

५ अ इति आमन्त्रणे । हे अ! हे कृष्ण! राजा–लोकरूढिवशात् घूकः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते, वामपार्श्वे दर्शितदर्शनत्वात् शब्दकरणत्वाद् वेति अर्थवशाद् गम्यम् २ । एवं असौख्यं ददते । दक्षिणपार्श्वे दर्शितदर्शनत्वात् शब्दकरणत्वाद् वेत्यपि अर्थवशाद् गम्यम् । इदं भिन्नभिन्नसमये दिग्विजयार्थं प्रस्थितानां कृष्णपुत्रादीनां वचनम् ॥ २ ॥ ४ ॥ सर्वे० ॥ २६६ ॥

## १० राः ज! अ! नो ददते सौख्यम्* ॥ २६७–२८२ ॥

अ इति आमन्त्रणे । हे अ!–हे कृष्ण! "राः कनके विभवे मेघे स्थानके ४" इति श्रीअनेकार्थतिलकवचनप्रामाण्यात् राः–कनकं नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । किं० अ! हे ज!–हे शत्रुजेतः! । इदं श्रीकृष्णेन युष्माकं किं सुखदायकमिति प्रश्नितानां स्वर्णाभरणवाञ्छकानां गोपाङ्गनानां कृष्णं प्रति वचनम् ॥ २ ॥ एवं असौख्यं १५ ददते । शेषं पूर्ववत् । इदं तद्विपरीतानां वचनम् ॥ २ ॥ सर्वे० ॥ ४ ॥

एवं ( राः– ) विभवो द्रव्यं( अस्मभ्यं अस्माकं वा ) सौख्यं ददते । इदं द्रव्यार्थिनां श्रीकृष्णं प्रति वचनम् ॥ २ ॥ एवं असौख्यं ददते । इदं प्रव्रज्यासमये संसारविरक्तानां द्वारिकावासिनां श्रीकृष्णं प्रति जनानां केषाञ्चित् वचनम् ॥ २ ॥ ४ ॥ पूर्वमी० ॥ ८ ॥

एवं राः–मेघः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं–सुखं ददते । इदं श्रीकृष्णं २० प्रति कर्षुकाणां वचनम् ॥ २ ॥ एवं असौख्यं ददते । इदं क्षेत्रे धान्यनिष्पत्तिसमये कर्षुकाणामेव वचनम् ॥ २ ॥ ४ ॥ पूर्वं ८ मीलने ॥ १२ ॥

एवं राः–स्थानम्–आश्रयः सौख्यं ददते । इदं स्थानार्थिनां वचनम् ॥ २ ॥ एवं असौख्यं ददते । इदं तद्विपरीतानां वचनम् ॥ २ ॥ ४ ॥ पूर्वमीलने ॥१६॥ सर्वे० ॥२८२॥

## रा ज! अ! आ नो ददते सौख्यम्* ॥ २८३–३०० ॥

२५ आ इति आमन्त्रणे । हे अ!–हे कृष्ण! रा–लक्ष्मीः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । किं० अ! हे ज! हे शत्रुजेतः! इदं लक्ष्मीसन्तोषितनिजदासदासीप्रभृतीनां कृष्णं प्रति वचनम् ॥ २ ॥ एवं असौख्यं ददते । इदं परस्परं कलिसमये लक्ष्मीसपत्नीनां राधा–रुक्मिणीप्रभृतीनां वचनं २ श्रीकृष्णं प्रति । पूर्वमीलने ॥ ४ ॥ एवं रा–रमणी नः–अस्मभ्यं १ अस्माकं २ च सौख्यं असौख्यं च ददते । इदं कृष्णं ३० प्रति प्रमदार्थिनां प्रमदाविरक्तानां च वचनम् । (४)पूर्वमीलने ॥ ८ ॥ सर्वे० ॥ ३०० ॥

## राजा अ! आ नो ददते असौख्यम् ॥ २०१-२०३ ॥

आ इति पादपूरणे। हे अ!-हे कृष्ण! रां-लक्ष्मीं जस्यति-धातूनामनेकार्थत्वात् नाशयतीति राजा-आपद् नः-अस्मभ्यं १ अस्माकं २ वा असौख्यं-दुःखं ददते। इदं आपदा पीडितानां जनानां कृष्णं प्रति वचनम् ॥ २ ॥ एवं नो-न सौख्यं ददते अर्थ-योजना पूर्ववत् ॥ १ ॥ पूर्वमी० ॥ ३ ॥ सर्वे० ॥ २०३ ॥ ५

## राजा अ! आ नो ददते सौख्यम्* ॥ २०४-२०७ ॥

रां-रमणीं जस्यति-नाशयति-मारयतीति डप्रत्यये आपि च राजा-स्त्रीमारिका काचिदेवंविधा स्त्री। आ इति कोपे। हे अ! हे कृष्ण! नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं च २ ददते। अर्थयोजना स्वयं कार्या ॥ ४ ॥ सर्वे० ॥ २०७ ॥

## र-अजा अ! अ नो ददते सौख्यम्* ॥ २०८-२११ ॥ १०

अजति-क्षिपतीति अजा। रस्य-कामस्य अजा-क्षेपका राजा-शीलवती स्त्री। हे अ!-हे कृष्ण! अ इति आमन्त्रणे। नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं वा २ ददते। इदं शीलवल्लभानां तद्विपरीतानां च श्रीकृष्णं प्रति वचनम् ॥४॥ सर्वे० २११

## राजा अ! आ नो ददते सौख्यम्* ॥ २१२-२७२ ॥

आ इति आमन्त्रणे। हे अ! "अः शिवे केशवे वायौ, ब्रह्म-चन्द्रा-ऽग्नि-सा(भा)नुषु" १५ इति विश्वशम्भु(श्लो० ५)वचनात् हे ईश्वर! राजा-चन्द्रः नः-अस्मभ्यं १ अस्माकं २ च सौख्यं ददते। इदं रतसमये स्वप्रियेश्वरेण समं रममाणपार्वतीवचनं चन्द्रोद्द्योतप्रद्योतिते जगति स्वप्रियं प्रति ॥ २ ॥ एवं हे अ!-हे ईश्वर! राजा-चन्द्रो नः-अस्मभ्यं १ अस्माकं च २, आ इति पादपूरणे, असौख्यं-कामपीडां ददते। त्वद्विरहे इति अर्थाद् गम्यम्। इद-मपि पार्वतीवचनम् ॥ २ ॥ सर्वे० ॥ ४ ॥ अत्र 'नः' इति बहुवचनं आत्मनो गौरवख्यापना- २० र्थम्। एवं यथा पञ्चाशदधिकद्विशतार्थेभ्यः २५० पश्चाद् ये एकषष्टिरर्थाः विष्णुवाचकेन अशब्देन समं कृताः, तथा शिववाचकेनापि अशब्देन समं एकषष्टिरर्थाः कार्याः। विशेष्यस्य भिन्नत्वाच्च अर्थभेदः स्फुट एव। मया तु ग्रन्थविस्तरभीत्या लिखनस्य एकपङ्क्त्या अल्प-भेदत्वाच्च न विविच्य लिखिताः। पृथग्भेदान्वेषिभिः विद्वद्भिः स्वयं कार्याः। एवं अर्थयोज-नाऽपि यथासम्भवं स्वयं कार्या सुधीभिः। ततो जाताः ॥ ६१ ॥ पूर्वोक्ताः ॥ २११ ॥ २५ मीलने च जाताः ॥ २७२ ॥

## राजा अ! आ नो ददते सौख्यम्* ॥२७३-४३३ ॥

अस्य-कृष्णस्य अपत्यं इः-कामः तस्यापि अपत्यं अः-अनिरुद्धः। ततः हे अ!-

---

१ 'सौख्यम्' इत्यर्थान्तरे। २ 'वा' इति पाठान्तरम्।

हे अनिरुद्ध! अ इति सम्बोधने, राजा–चन्द्रः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । इदमपि रतसमये स्वप्रियेण समं रममाणाया उषाया वचनं अनिरुद्धं प्रति ॥ २ ॥ एवं असौख्यं ददते त्वद्विरहे इति शेषः। शेषं पूर्ववत् ॥ २ ॥ ततः ॥ ४ ॥ अथवा नो–न असौख्यं ददते, सौख्यं ददते इत्यर्थः। तथा नो–न सौख्यं–सुखं ददते, दुःखं ददते इत्यर्थः। ५ शेषं पूर्ववत् । एवं अनिरुद्धवाचिनाऽपि अशब्देन समं पूर्वरीत्या एकषष्टिरर्था ज्ञेयाः। तद्दिक् प्रदर्शिता । अर्थयोजनाऽपि स्वयं कार्याऽऽर्यैः । पूर्वोक्त३७२मीलने जाताः सर्वेऽपि ॥ ४३३ ॥ तथाऽत्र वायु-चन्द्रा-ऽर्हद्वाचिनाऽपि अशब्देन समं बहवोऽर्था अनया रीत्या उत्पद्यन्ते, परं मया प्रयासबाहुल्यात् परस्परं स्तोकभेदत्वाच्च उपेक्षिताः। जाताः सर्वे ॥४३३॥

## र-अजा नो ददते सौख्यम्* ॥ ४३४–४३७ ॥

१० अजन्ति–क्षिपन्तीति अचि अजाः, ततो रस्य–कामस्य अजाः–क्षेपकाः राजाः–कामहन्तारोऽर्थाद् विशेषणाद् विशेष्यप्रतीतिरिति न्यायाद् वा यतयः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं–सुखं ददते । यतो हि—

"सुरासुरनराः सर्वे, येनैते स्ववशीकृताः।
निर्जितो यैः स कामोऽपि, ते यतीशाः सुखप्रदाः ॥ १ ॥"

१५ इत्युक्तत्वात् यतयः सुखप्रदा एव स्युः ॥ एवं असौख्यं ददते । इदं कामिनां वचनम् ॥ २ ॥ पूर्वोक्तमीलने सर्वे० ॥ ४३७ ॥

## राजा! नो ददते सौख्यम्* ॥ ४३८–४३९ ॥

हे राजाः!–हे यतयः! । व्युत्पत्त्यादि पूर्ववत् । नो–बुद्धः अवगततत्त्वोऽर्थात् जिनः सौख्यं–सुखं ददते, अमृतस्राविवचनेन प्रीणयतीत्यर्थः। अस्माकमिति शेषः । इदं भगवद्-२० व्याख्यानश्रवणानन्तरं अत्यन्तं तुष्टमनसो भव्यस्य यतीनुद्दिश्य वचनम् ॥ १ ॥ एवं असौख्यं ददते अभव्यस्य, अन्यथा वाऽर्थयोजना कर्तव्या ॥ २ ॥ सर्वे० ॥ ४३९ ॥

## राज! अनो ददते सौख्यम्* ॥ ४४०–४४१ ॥

हे राज!–हे यते! अनः–अबुद्धः सौख्यं ददते । इदं मूर्खाणां वचनम् ॥ १ ॥ एवं असौख्यं ददते । इदं पण्डितजनवचनम् ॥ २ ॥ सर्वे० ॥ ४४१ ॥

## २५ राजा! नो ददते सौख्यम्* ॥ ४४२–४४३ ॥

हे राजाः!–हे यतयः! । व्युत्पत्त्यादि पूर्ववत् । "नस्तु संविदि" इति अनेकार्थतिलकोक्तेः नो–ज्ञानं सौख्यं ददते । अस्माकमिति अर्थवशाद् गम्यम् । इदं यतीन् प्रति ज्ञानार्थिनां वचनम् ॥ १ ॥ एवं असौख्यं ददते मूर्खतां कामयमानानाम् ॥ २ ॥ सर्वे० ॥ ४४३ ॥

## राज ! अनो ददते सौख्यम्* ॥ ४४४–४४५ ॥

हे राज !–हे यते ! नो–ज्ञानं तद्विरुद्धं अनः–अज्ञानं सौख्यं ददते । अस्माकमिति शेषः । इदं यतीन् प्रति अज्ञानं कामयमानानां वचनम् ॥ १ ॥ एवं असौख्यं ददते । इदं ज्ञानार्थिनां वचनम् ॥ २ ॥ सर्वे० ॥ ४४५ ॥

## राजा ! नो ददते सौख्यम्* ॥ ४४६–४४७ ॥

"नः पुनर्बन्धबुद्धयोः" इति वचनात् नो–बन्धोऽर्थात् कर्मणां बन्धः । हे राजाः !–हे यतिनः ! नः–अस्माकं सौख्यं ददते ? अपि तु न इति काक्वा व्याख्येयम् ॥ १ ॥ अथवा सौख्यं ददते । अर्थयोजना यथा चेतसि चमत्कारमादधाति तथा स्वयमेव विधेया । एवं असौख्यं ददते । इदं कर्मबन्धभीतानां नराणां यतीन् प्रति वचनम् ॥ २ ॥ सर्वे० ॥ ४४७ ॥

## राज ! अनो ददते सौख्यम्* ॥ ४४८–४४९ ॥

हे राज !–हे यते ! नो–बन्धस्तद्विरुद्धो अनः–अबन्धः, कर्ममोक्ष इत्यर्थः । अस्माकं सौख्यं ददते । इदं मुक्तिकामानां यतिं प्रति वचनम् ॥ १ ॥ एवं असौख्यं ददते । इदं तद्विपरीतानां वचनम् ॥ २ ॥ सर्वे० ॥ ४४९ ॥

## राजा ! नो ददते सौख्यम्* ॥ ४५०–४५१ ॥

"नो नरे च[1] सनाथे च, नोऽनर्थेऽपि प्रदर्शने" इति विश्वशम्भु(श्लो० ७६)वचनात् हे राजाः !–हे यतयः ! नः–अनर्थः अस्माकं सौख्यं ददते । इदं यतीन् प्रति प्रतिबोधसमये धीवरादीनां वचनम् ॥ १ ॥ एवं असौख्यं ददते । इदं अनर्थभीतचेतसां चतुराणां वचः ॥ २ ॥ सर्वे० ॥ ४५१ ॥

## र-अज-अ नो ददते सौख्यम्* ॥ ४५२–४५५ ॥

रः–कामः–कामदेवः । अजो–हरः–ईश्वरदेवः । अः–कृष्णः । ततो रश्च अजश्च अश्च राजाः काम–शिव–विष्णुसंज्ञकास्त्रयोऽपि देवाः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । इदं ( तत् )तद्भक्तानां वचनम् ॥ १ ॥ एवं असौख्यं ददते । इदं तद्विपरीतानां वचनम् ॥ २ ॥ सर्वे० ॥ ४ ॥ पूर्वोक्तमी० ॥ ४५५ ॥

## र-अ-अजाः ! नो ददते सौख्यम्* ॥ ४५६–४६५ ॥

हे राजाः !–हे काम-शिव-विष्णुदेवाः ! नो–बुद्धः १ ज्ञानं २ बन्धः ३ अनर्थो ४ वा अस्माकमिति गम्यम्, सौख्यं १ असौख्यं २ वा ददते । अर्थयोजना स्वयं कार्या

---

१ 'नः सनाथे च' इति प्रत्यन्तरे ।

सुधीभिः। एते चत्वारोऽर्थाः सौख्यासौख्यपदाभ्यां द्विगुणिताः ८ भवन्ति। एवं नो-नरः इति नरशब्देनापि समं अर्थद्वयं कार्यम्। जाताः ॥ १० ॥ सर्वे० ॥ ४६५ ॥

## र-अज-आ नो ददते सौख्यम्* ॥ ४६६-४७१ ॥

"रः सूर्येऽग्नौ धने कामे" इत्यादि विश्वशम्भु(श्लो० १०१)वचनात् रः-श्रीसूर्य-
५ देवः, अजो-हरिः, आ-ब्रह्मा, ततो द्वन्द्वे कृते राजाः-श्रीसूर्य-विष्णु-ब्रह्माख्यास्त्र-योऽपि देवाः नः-अस्मभ्यं १ अस्माकं २ न ३ वा सौख्यं १ असौख्यं २ वा ददते ॥ ६ ॥ इदं तद्भक्तिमतां तद्विपरीतानां च वचनम्। अर्था जाताः ॥ ६ ॥ सर्वमीलने जाताः ॥ ४७१ ॥

## र-अज-आ ! नो ददते सौख्यम्* ॥ ४७२-४८१ ॥

१० हे राजाः!-हे सूर्य-हरि-ब्रह्मदेवाः! नो-बुद्धः १ ज्ञानं २ बन्धः ३ अनर्थो ४ नरो ५ वा सौख्यं १ असौख्यं २ च ददते। अर्थयोजना तु स्वयं विधेया धीमद्भिः सद्भिः। अर्थाः ॥ १० ॥ सर्वमीलने ॥ ४८१ ॥

## रा-ज-आनः ददते सौख्यम्* ॥ ४८२-४८७ ॥

"रा रमा रमणी बाला" इति (विश्व० श्लो० १०१)वचनात् रा-लक्ष्मीः ततो
१५ जो-जातः आनो-मुखश्वासः राजानः सौख्यं १ असौख्यं २ च ददते। इदं श्रीकृष्णस्य सम्भोगसमये तन्निवृत्तिसमये च वचनम्। अन्यथा वा अर्थयोजना कार्या। अर्थाः ॥ २ ॥ एवं रा-रमणी तस्याः सकाशात् जो-जातः आनो-मुखश्वासः सौख्यं १ असौख्यं २ ददते। इदं कामिविरक्तजनयोर्वचनम् ॥ २ ॥ एवं रा-बाला ततो जो-जातः आनो-मुखश्वासः सौख्यं १ असौख्यं २ ददते। अर्थयोजना स्वयमेव यथा चमत्कारं करोति तथा
२० विधेया ॥ २ ॥ पूर्व ४ मीलने ॥ ६ ॥ सर्वमीलने ॥ ४८७ ॥

## रा-अ-ज-आनो ददते सौख्यम्* ॥ ४८८-४९७ ॥

रा-पर्यायेण श्रीः। अः-कृष्णः। रया-श्रिया उपलक्षितः अः राअः-श्रीकृष्णः। तस्मात् जो-जातः आनो-मुखश्वासो राजानः सौख्यं १ असौख्यं २ च ददते। इदं सम्भोगसमये मुखचुम्बनावसरे गोपाङ्गनानां, तद्विपरीतसमये तासामेव अन्यासां च वचनम् ॥ २ ॥

२५ एवं कृष्णवाचि अशब्दवत् शिव१अर्हत्२अनिरुद्ध३वाचिनाऽपि अशब्देन समं अर्थाः कार्याः। ततः पूर्ववत् समासादिके कृते सति राजानः इति कोऽर्थः? श्रीशिवमुखश्वासः १ श्रीअर्हन्मुखश्वासः २ श्रीअनिरुद्धमुखश्वासश्च ३ सौख्यं १ असौख्यं २ च ददते। जाताः ॥ ६ ॥ अर्थयोजना स्वयं कार्या। पूर्वद्वयमीलने ॥ ८ ॥

एवं आ–ब्रह्मा इत्यनेनापि शब्देन समं अर्थद्वयम् ॥ २ ॥ जाता अष्टमीलने ॥ १० ॥ सर्वे० ॥ ४९७ ॥

## र-आ-ज-आनो ददते सौख्यम्* ॥ ४९८–५०५ ॥

"रः स्मरे। तीक्ष्णे विश्वानरे शब्दे, रामे वज्रे नरे" इति श्रीतिलकानेकार्थवचनात्। "रः सूर्येऽग्नौ धने कामे" इति श्रीविश्वशम्भु( श्लो० १०१ )वचनाच्च रः–कन्दर्पः ५ १ अग्निदेवता २ सूर्यदेवता ३ नरश्च ४, ततो रात्–कन्दर्पात् १ अग्निदेवात् २ सूर्यात् ३ नरात् ४ आ–सामस्त्येन जो–जातः आनो–मुखश्वासो राजानः सौख्यं १ असौख्यं २ च ददते। इदं तोषपोषसमये[1] रोषसमये च तत्तत्स्त्रीणां अन्येषां वा वचनम्। जाताः ॥८॥ सर्वमीलने ॥ ५०५ ॥

## ल-आ-ज-आनो ददते सौख्यम्* ॥ ५०६–५०७ ॥ १०

"लश्च लौ च ( लूश्च ) बिडौजसि" इति सुधाकलश( श्लो० ३८ )वचनात् लः– इन्द्रः तस्मात् आ–सामस्त्येन जो–जातः आनो–मुखश्वासो लाजानः सौख्यं १ असौख्यं २ च ददते। अस्माकमिति शेषः। इदं शचीनां स्वपतिना समं मुखचुम्बनकामानां १ अकामानां च तस्मिन् तस्मिन् समये वचनम् ॥ २ ॥ सर्वे० ॥ ५०७ ॥

## र-अज-आनो ददते असौख्यम् ॥ ५०८ ॥ १५

"रं जले रङ्गवेगयोः" इति विश्वशम्भु(श्लो० १०१)वचनात् रस्य–रङ्गस्य अजः– क्षेपकः–निराकारकः आनो–मुखश्वासो यस्य स राजानः एवंविधः कोऽपि जनः असौख्यं ददते, दुःखदायिश्वासत्वात्। इदं तथाविधस्त्रीपुरुषवचनं निजसखीजनं प्रति ॥ ५०८ ॥

## रा-अज-आनो ददते सौख्यम्* ॥ ५०९–५१० ॥

रा–दीप्तिः तस्याः अजः–क्षेपको राजः एवंविधः आनो–मुखश्वासो यस्य स राजानः २० सौख्यं १ असौख्यं २ च ददते। अर्थयोजना स्वयं कार्या ॥ २ ॥ सर्वे० ॥ ५१० ॥

## राज अनो-द! द-त! ईसौख्य!* ॥ ५११ ॥

अनः–शकटं अर्थात् शकटरूपं दैत्यं द्यति–खण्डयतीति अनोदोऽर्थाक्षेपान्नारायणः तत्सं० हे अनोद!–हे श्रीकृष्ण! त्वं राज–दीप्तिं प्राप्नुहि। 'राजृ दीप्तौ" इत्यस्य धातोरुभयपदित्वात् परस्मैपदित्वम्। हे दत! दं–दानं तेन ता–शोभा यस्य स दतः तत्सं० हे दत! २५ हे ईसौख्य! ईः–लक्ष्मीः निजभार्या तस्याः सौख्यं यस्य यस्मात् स ईसौख्यः तत्सं० हे ईसौख्य! ॥ १ ॥ सर्वे० ॥ ५११ ॥

## र! अज अनो-द! द-त! ईसौख्यम् ॥ ५१२–५७२ ॥

हे अनोद!–हे श्रीकृष्ण! त्वं ईसौख्यं–लक्ष्मीसौख्यं अज–गच्छ। हे र! राजते

---

१ 'सन्तोषभोगसमये' इति ख–ग–पाठः।

इति डे रः तत्सं० हे र ! । पुनः हे दत ! । व्युत्पत्त्यादि पूर्ववत् ॥ १ ॥ एवं ईसौख्यं अज-क्षिप, दूरीकुरु इत्यर्थः । इदं श्रीकृष्णं प्रति प्रतिबोधसमये यतीश्वरवचनम् ॥ २ ॥ एवं "ईर्भुवि श्रियाम्" इति तिलकानेकार्थवचनात् ईसौख्यं-पृथ्वीसौख्यं अज-गच्छ । इदं सेवकानामाशिषा वचनम् ॥ ३ ॥ एवं ईसौख्यं-पृथ्वीसौख्यं अज-त्यज । इदमपि ५ यतिवचनं प्रतिबोधसमये ॥ ४ ॥ एवम्—

"इः कुत्सार्थेऽपि पापे (कामे)ऽपि, निषेधे नयनभ्रमे ॥ ६ ॥
ई रमा-मदिरा-मोहे, महानन्दे शिरोभ्रमे ।
स्त्रीलिङ्गोऽयमुपाद्यन्तो, नान्तोऽस्माल्लोपनं सुपः ॥ ७ ॥
ईयौ योऽयात्र जसा रूपं, स्यादमारूपमीं शसि ।"

१० इति विश्वशम्भु(श्लो० ६-८)वचनात् इसौख्यं-कुत्सासौख्यं अज-क्षिप ॥ ५ ॥

एवं ईसौख्यं-मदिरासौख्यं ६ मोहसौख्यं ७ अज-क्षिप । अर्थयोजना स्वयं कार्या । एवं ईसौख्यं-महानन्दसौख्यं अज-गच्छ ॥८॥ एवं ईसौख्यं-प्रत्यक्ष(?)सौख्यं अज-गच्छ । अर्थयो० ॥ ९ ॥ एवं "इः स्मरेऽर्थेऽव्ययं खेदे कोपोक्तौ" इति तिलकानेकार्थवचनात् इसौख्यं-कामसौख्यं अज-गच्छ ॥ १० ॥ पक्षे क्षिप ॥ ११ ॥ अर्थयो० ।

१५　　　　( र ! अज अनोद ! दते ! सौख्यम्* )

दतेसौख्यं इत्यत्र एवं पदविश्लेषः कार्यः-दते असौख्यम् । तत एवं उक्तिः हे अनोद ! त्वं असौख्यं-दुःखं अज-क्षिप ॥ १२ ॥ एवं असौख्यं-दुःखं अज-गच्छ । इदं कृष्णस्य दुःखमिच्छतस्तथाविधस्य कस्यचिद्वचनम् ॥ १३ ॥ हे दते ! दस्य-देवस्य तिः-पूजा यस्य सः । अथवा दवत्-देववत् तिः-पूजा यस्य स दतिस्तत्सं० हे दते ! । शेषं पूर्ववत् ॥ १३ ॥ २० एवं सौख्यं अज-गच्छ ॥ १४ ॥ क्षिप वा ॥ १५ ॥ अर्थयो० । एवं एते एव पञ्चदशार्थाः ॥ १५ ॥ परोक्षाप्रथमपुरुषैकवचनजातया आज इत्येवंरूपक्रियया समं योज्याः । यथा हे अनोद ! त्वं ईसौख्यं-लक्ष्मीसौख्यं आज-जगाम । शेषं पूर्ववत् । एवमन्येऽपि अनया पूर्वोक्तरीत्या च ॥ १४ ॥ अर्थाः कार्याः । अर्थयोजना स्वयं कार्या । जाताः ॥ ३० ॥

( राज अनोद-द ! त ! ई-सौख्य ! )

२५　एवं अनोदं-श्रीकृष्णं दयते-पालयति-रक्षतीति अनोददः-नन्दगोकुली तत्सं० हे अनोदद !-हे नन्दगोकुलिन् ! त्वं राज-दीप्तिं प्राप्नुहि । हे ईसौख्य ! पूर्ववत् ? । हे त ! तस्य-तत्त्वस्य ज्ञानस्य वा इत्यादिप्रयोगदर्शनात् तो-ज्ञानं आधाराधेययोरभेदोपचारात् "कुन्ताः प्रविशन्ति" इत्यादिवत् लक्षणया वा त इति कोऽर्थः ? ज्ञानवानित्यर्थः । अथवा तनोति सुखादिकं इति डे प्रत्यये तः तस्य सं० हे त ! । यत्र च ते सौख्यं ३० असौख्यं एवं पदविभागस्तत्र तस्य पूर्वोक्त एव अर्थः । इ इति च सम्बोधने पादपूरणे वा

१ 'हे र ! पूर्ववत्' इत्यधिकः पाठः क-ख-ग-घ-प्रतिषु वरीवर्ति, किन्तु सोऽस्थानीय इति प्रतिभाति । 'र ! अज अनोदर ! त ! ई-सौख्य' इति पाठसम्भवे तत्स्वीकारः कर्तुं शक्यः ।

ज्ञेयम् । सन्धौ कृते च रूपसिद्धिः इत्येवंरीत्या स्वयं ३१ अर्थाः कार्याः । अर्थयो० । मया तु विस्तरभीत्या न विस्तरतया लिखिताः । जाताः ॥ ६१ ॥ सर्वे० ॥ ५७२ ॥

## र! अजा नो ददते सौख्यम्* ॥ ५७३-५८४ ॥

रः-अग्निः तत्सम्बोधने हे र! अर्थादधिष्ठानाधिष्ठात्रोरभेदोपचाराद् वा हे अग्न्यधिष्ठायकदेवते!, हे अग्निदेवते! इत्यर्थः । अजाः-छागाः हुता इति अर्थसामर्थ्याद् गम्यम्, नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं-स्वर्गादिसुखं ददते । इदं अग्निहोतृवाक्यम् । एवं असौख्यं ददते । इदं तद्विपरीतानां वचनम् ॥ ४ ॥ एवं नो-न सौख्यं ददते ॥५॥ एवं नो-न असौख्यं ददते ॥ ६ ॥ शेषं पूर्ववत् । अर्थयोजना स्वयं कार्या ॥ ६ ॥

एवं "अजस्त्रैवार्षिको व्रीहिः" (अनेका० श्लो० २१ इति) धनञ्जयी(य)कोशाभिधानात् अजाः-त्रैवार्षिका व्रीहयः इति त्रिवार्षिकव्रीहिवाचिनाऽपि अजशब्देन समं पूर्ववत् षडर्थाः कार्याः ॥ ६ ॥ यथा-हे र!-हे अग्निदेवते! अजास्त्रैवार्षिका व्रीहयो नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । अर्थयोजना स्वयं कार्या । एवमन्येऽपि अर्थाः कार्याः । अथवा प्रकारान्तरेण अर्थाः कार्याः । तथाहि-हे र!-हे नर! अजाः-त्रैवार्षिका व्रीहयो नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । इदं केनचिद् वैगुण्येन येषां त्रैवार्षिका व्रीहय एव रोचन्ते नान्यत् धान्यं तेषां वचनम् । एवं असौख्यं ददते तद्विपरीतानाम् ॥ ६ ॥ उभयमीलने जाताः ॥ १२ ॥ सर्वे० ॥ ५८४ ॥

## रा-अजा नो ददते सौख्यम्* ॥ ५८५-६२० ॥

"अजो विष्णौ रघूद्भवे । विरञ्चे मन्मथे रुद्रे, मेषे" इति तिलकानेकार्थवचनात् रा-श्रीः, ततः रया-श्रिया उपलक्षिताः अथवा रापूर्वकाः अजाः राजाः, श्रीकृष्णाः इत्यर्थः । नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं ददते । इदं वैष्णववचनम् ॥ २ ॥ एवं असौख्यं ददते । इदं कालनेमि-हयग्रीव-शकटाऽरिष्टदैत्यादीनां वचनम् । जाताः ॥ ४ ॥ एवं नो-न सौख्यं असौख्यं च ददते इति ॥ २ ॥ अर्थौ । शेषं पूर्ववत् । जाताः ॥ ६ ॥

एवं राजाः । व्युत्पत्त्यादि पूर्ववत् । रघूद्भवाः अजाभिधाना राजानो नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं २ च ददते-प्रयच्छन्ति । इदं तन्मित्राणां तच्छत्रूणां च वचनम् । एवं ६ अर्थाः कार्याः ॥ जाताः ॥ १२ ॥

एवं राजाः-श्रीब्रह्माणः १ श्रीकामदेवाः २ ईश्वराश्च इत्यर्थवाचिनाऽपि राजशब्देन समं षट् षडर्थाः ६ कार्याः । जाताः ॥१८॥ पूर्वोक्त १२ मीलने ॥ ३० ॥

एवं हे र!-हे नर! अजाः-छागाः गलस्तन्यो वा नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं असौख्यं च ददते । नो-न सौख्यं असौख्यं च ददते । इदं अजापालानां तद्विपरीतानां

च वचनम् ॥ ६ ॥ अर्थयोजनाऽपि यत्र तादृशी न भवति कृता तत्र कुशाग्रीयमतिभिः स्वयं कार्या । मया तु ग्रन्थगौरवभिया न वारंवारं लिख्यते । पूर्वोक्त १० मीलने जाताः ॥ ३६ ॥ सर्वे० ॥ ६२० ॥

## राजानः! ददते सौख्यम्* ॥ ६२१–६२४ ॥

५ हे राजानः!–हे नृपाः! ददते अर्थात् दानं ददानाय पुरुषाय सौख्यं–सुखं, अस्तु इति शेषः, दानस्य सर्वाभीष्टार्थसाधकत्वात् । यदुक्तम्—

"धर्मस्य मूलं पदवी महिम्नः, पदं विवेकस्य फलं विभूतेः ।
प्राणाः प्रभुत्वे प्रतिभूश्च सिद्धे–र्दानं गुणानामिदमेकमोकः ॥ १ ॥
दानेन चक्रित्वमुपैति जन्तु–र्दानेन देवाधिपतित्वमुच्चैः ।
१० दानेन निःशेषयशोऽभिवृद्धि–र्दानं शिवे धारयति क्रमेण ॥ २ ॥"

इत्यादि ॥ १ ॥ एवं असौख्यं–दुःखं स्यादिति गम्यं इह मार्गणादिलोककृतसन्तापवशादिति ॥ २ ॥ एवं अददते पुरुषाय, कृपणायेत्यर्थः । सौख्यं । मार्गणादिजनानुच्चाटनत्वात् । इदं मार्गणादिसन्तापितस्य दीयमानदानस्य पञ्चजनस्य राज्ञः प्रति वचनम् ॥ ३ ॥ एवं अददते असौख्यं दानपुण्याभावात् ॥ ४ ॥ सर्वे० ॥ ६२४ ॥

## १५ राज! आ-नो! ददते अददते सौख्यम्* ॥ ६२५–६२८ ॥

आ–अतिशायिनी नुः–स्तुतिर्लोके यस्य स आनुः तस्य सं० हे आनो–अतिशायिस्तुतिमन्! ददते पुरुषाय सौख्यं ॥ १ ॥ हे राज! राजतेः अचि राजस्तत्सं० हे राज! । शेषं पूर्ववत् । अमुना प्रकारेण पूर्ववत् ४ अर्थाः कार्याः । एवमत्र खण्डनया भिन्नभिन्नविशेष्यसम्बोधनपदकर्षणेन अनेकेऽर्थाः उत्पद्यन्ते, परं मया बहुप्रयासभीत्या न २० लिखिताः । सर्वे० ॥ ६२८ ॥

## राजानो ददते सौख्यम्* ॥ ६२९–६३० ॥

राजानं आनयति–जीवयतीति राजानो–राजवैद्यः सौख्यं ददते, रोगिणामिति शेषः, रोगापहारेण सौख्यदानात् ॥ १ ॥ एवं असौख्यं ददते । तथाविधानां केषाञ्चित् ॥ २ ॥ अर्थयो० । सर्वे० ॥ ६३० ॥

## २५ राजानो ददते असौख्यम्* ॥ ६३१–६३७ ॥

राजानो–नृपाः ।

"(वाच्यलिङ्गः) खशब्दोऽर्के, वितर्के व्योम्नि वेदने ।
प्रश्ननिन्दानृपक्षेप–सुखशून्येन्द्रिये दिवि ॥ २४ ॥
अवसानेऽपवर्गेऽपि, परब्रह्मण्यपीरितः ।"

---

१ 'अददते' इति अर्थान्तरे । २ 'राजा नो' इत्यर्थान्तरे ।

इति श्रीविश्वशम्भु( श्लो० २४–२५ )वचनात् खं–सुखं तस्य भावः ख्यं, सुखत्वमित्यर्थः । असौ–कृपाणे सति ददते । वैरिणामिति शेषः । अपि तु न ददते इति काकुवचनम् ॥१॥ एवं राजा–नृपः नो–न असौ–कृपाणे सति ख्यं–सौख्यत्वं ददते, वैरिणामिति शेषः ॥२॥

एवं राजा–नृपो नः–अस्मभ्यं १ अस्माकं २ वा असौ–कृपाणे (सति) ख्यं–सुखत्वं ददते । कोऽर्थः? यावद् राजा सशस्त्रः तावत् शत्रुभ्यो भयाभावेन अस्माकं सदा सौख्यमेवेति भावः ॥ २ ॥ पूर्वोक्त २ मीलने ॥ ४ ॥

एवं असौ–प्रत्यक्षो राजा–नृपो नः–अस्मभ्यं १ अस्माकं २ न ३ वा ख्यं–सौख्यत्वं ददते । अर्थयोजना स्वयं कार्या ॥ ३ ॥ पूर्वोक्त ४ मीलने ॥ ७ ॥ सर्वे० ॥ ६३७ ॥

## राजा नो ददते असौ खी अम् ॥ ६३८–६४० ॥

असौ राजा । खीति विशेषणात् स्वामी इन्द्रो नः–अस्मभ्यं १ अस्माकं २ (वा)

"अं मान्तो ब्रह्मसंवादे, परब्रह्मप्रवाचकः ॥
व्यसने व्याधिते व्याधौ, ज्ञानविज्ञानवन्दने ।"

इति विश्वशम्भु(श्लो० १९–२०)वचनात् अं–परब्रह्म ददते, परब्रह्मसदृशं सौख्यं ददातीत्यर्थः । किं०? 'खी' खे–स्वर्गे तिष्ठतीति खी । इदं स्वर्गाधिपसन्मानितसुरवचनम् ॥२॥

एवं असौ राजा अर्थवशात् यादवेशः खी–सुखी सन् अं–कृष्णं नो–न ददते । इदं कंसवधानन्तरं जरासन्धराज्ञा कृष्णे याचिते सति वलमानं जरासन्धं प्रति गतप्रत्यागतनिजपुरुषवचनम् ॥ १ ॥ सम्बन्धश्चान्यशास्त्रान्तरादवसेयः ॥ ३ ॥ सर्वे० ॥ ६४० ॥

## राजा नो ददते अः सौखी अम् ॥ ६४१–६४३ ॥

अः–कृष्णः नः–अस्मभ्यं १ अस्माकं २ वा अं–परब्रह्म ददते । किं०? 'राजा' स्वामी । पुनः 'सौखी' सुखसमाहारयुक् ॥ १ ॥ एवं अः–कृष्णः अं ददते । किं०? 'राजा' । पुनः नो–न सौखी असौखी–सुखसमाहारवियुक्तः, प्राप्तकष्टस्थितिरित्यर्थः । भगवतो हि श्रीनारायणस्य दशावतारान्तर्गतमीनावतारस्य शङ्खदैत्यापहृतवेदोद्धारपरायणस्य पातालगमने प्राप्तकष्टत्वात् । यदुक्तं खण्डप्रशस्तकाव्ये—

"मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्क्तुतिः
पुच्छाच्छोटसमुच्छलज्जलभरप्राग्भाररिक्तोदधेः ।
पातालावटमध्यसङ्कटतया पर्याप्तकष्टस्थिते–
र्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ १ ॥"–शार्दूल०

इत्यादि । अत्रत्यसम्बन्धस्त्वन्यशास्त्रान्तरादवसेयः । मया तु ग्रन्थविस्तरभीत्या न लिखितः । इदं शङ्खदैत्यान्तकरणानन्तरं वेदे वालिते निजसेवकजनवचनम् ॥ २ ॥

१ अन्यशब्दाश्चिन्त्यः । २ 'युक्तः' इति ग-घ-पाठः । ३ अन्यसम्बन्धश्चिन्त्यः ।

एवं नो-न अं-परब्रह्म परब्रह्मसदृशं सौख्यं ददते। शेषं पूर्ववत्। इदं कृष्णस्य द्वारिकागमने विरहव्याप्तवृन्दावनवर्तिगोपाङ्गनावचनम् ॥३॥ अत्र चित्रादित्वात् विसर्गलोपो न दोषाय ॥ ३ ॥ सर्वे० ॥ ६४३ ॥

## राजा नो ददते असौ खी अम् ॥ ६४४ ॥

५ असौ राजा-नृपः नः-अस्मभ्यं १ अस्माकं २ वा अं-परब्रह्म ददते। किं०? 'खी' खं-संविदस्यास्तीति खी। इदं ज्ञानिराजदीयमानपरब्रह्मणो नरस्य वचनम् ॥ १ ॥ एवं असौ राजा अं-पर० नो-न ददते यतः। किं०? खी-ज्ञानी। इदं जडवचनम्। ज्ञानिनो हि गुणान् ज्ञानिन एव जानन्ति, न तु अतद्विधा अज्ञानिनः। अतो मूर्खाणां ज्ञानिनो न सौख्यप्रदाः। यदुक्तं श्रीचम्पूकथायाम्—

१० "जानन्ति हि गुणान् वक्तुं, तद्विधा एव तादृशाम्।
वेत्ति विश्वम्भरा भारं, गिरीणां गरिमाश्रयम् ॥ १ ॥"

इति ॥ २ ॥

असौ नः-अस्माकं राजा-अस्मत्स्वामी अं-पर० ददते। भक्तानामिति गम्यम्। किं०? 'खी' ज्ञानी, अर्थादुत्पन्नकेवलज्ञानः। इदं कोपि स्विकस्वामिनं अङ्गीकृतसंयमभारं १५ ततः समुत्पन्नकेवलज्ञानं सममालोक्य[1] अवादीत् ॥ ३ ॥ एवं असौ राजा-यमो नो-न अं-पर० ददते। किं०? 'खी' खं-वितर्कः किममुं नरादिकं संहरामि किममुमित्यादिरूपो विद्यते यस्मिन् यस्य वा स खी। यमस्य हि प्राणिप्राणसंहरणस्वभावत्वात् परब्रह्मदानं कुतः?। इदं यमापह्रियमाणनरवचनम् ॥ ४ ॥ असौ राजा-यमो नः-अस्मभ्यं १ अस्माकं २ वा अं-पर० ददते? अपि तु नेत्यर्थः इति काक्वा व्याख्येयम्। यतो हि परो लक्षोपा- २० यैर्निजजीवितरक्षणकृते क्रियमाणैरपि यमो जनादि हरत्येव। यदुक्तम्—

"वदत यदीह कश्चिदनु सन्ततसुखपरिभोगलालितः
प्रयतनशतपरोऽपि विगतव्ययमायुरवाप्तवान् नरः?।
न खलु नरसुरौघसिद्धविद्याधरकिन्नरनायकोऽपि यः
सोऽपि कृतान्तदन्तकुलिशाक्रमणक्रशितो न नश्यति ॥ १ ॥
२५ नश्यति[2] नौति यैति[3] वितनोति करोति रसायनक्रियां
चरति गुरुव्रतानि विवराण्यपि विशति विशेषकातरः।
तपति तपांसि खादति मितानि करोति च मन्त्रसाधनं
तदपि कृतान्तदन्तयन्त्रक्रकचक्रमणैर्विदीर्यते ॥ २ ॥"

---

१ 'समालोक्य' इति क-पाठः। २ 'नश्यति' इति ख-पाठः। ३ 'यतति' इति ग-पाठः।

इत्यादि ॥ ४ ॥ एवं राजा-चन्द्रो नः-अस्मभ्यं १ अस्माकं २ वा अं-पर० ददते। किं०? 'खी' खं-सुखं देवसम्बन्धि अस्यास्तीति खी। इदं रोहिण्या वचनम् ॥ २ ॥ पू० ६ ॥ असौ राजा-चन्द्रः चन्द्रग्रहः नो-न अं-पर० ददते। किं०? यतः 'खी' खं-निन्दा अयं पापिष्ठो मां पीडयति इत्यादिरूपा यस्य स खी। द्वितीयचतुर्थपञ्चमाष्टमनवमद्वादश इत्यर्थः। द्वितीयादिचन्द्रो हि कृते अशुभे लोकैर्निन्द्यते। यदुक्तं रत्नकोशे[1]— ५

"जन्मस्थः कुरुते पुष्टिं, द्वितीये नास्ति निर्वृतिः।
तृतीये राजसन्मानं, चतुर्थे कलहागमः ॥ १ ॥
पञ्चमेऽर्थपरिभ्रंशः, षष्ठे धान्यधनागमः।
सप्तमे राजपूजा च, अष्टमे प्राणसंशयः ॥ २ ॥
नवमे कार्यहानिः स्यात्, सिद्धिश्च दशमे भवेत्। १०
एकादशे जयो नित्यं, द्वादशे मृत्युमादिशेत् ॥ ३ ॥"

॥ ७ ॥ एवं राजा-यक्षः असौ-प्रत्यक्षः नः-अस्मभ्यं १ अस्माकं २ वा आराधितः इति अर्थवशात् गम्यम् अं-पर० ददते। किं०? खी-सुखवान्। इदं यक्षदीयमानपरब्रह्मणां यक्षसेवकानां वचनम् ॥ २ ॥ पू०७मी० ॥ ९ ॥ असौ राजा-यक्षो अनाराधित इति शेषः अं-पर० नो-न ददते। किं०? 'खी' पूर्ववत् ॥ १ ॥ पूर्व ९मी० ॥ १० ॥ सर्वे० ॥ ६५३ ॥ १५

## र-अज-आ नः अददत †ईसौख्यम् ॥ ६५४-६५७ ॥

रः-कामः अजो-हरः आ-ब्रह्मा, ततो द्वन्द्वे कृते राजाः- कन्दर्पेश्वरब्रह्माणः। एते त्रयोऽपि देवाः नः-अस्मभ्यं १ अस्माकं २ वा ईसौख्यं इसौख्यं च-लक्ष्मीसौख्यं कामसौख्यं च अददत-अदुरित्यर्थः। अत्र 'डुदाञ् दाने' (पा० धा० १०९१) इत्यस्य धातोरात्मनेपदविवक्षायां अनद्यतनीविषये प्रथमपुरुषबहुवचने अददत इति रूपम्। एवमग्रेऽपि विज्ञेयम्। अर्थाः ॥ ४ ॥ सर्वे० ॥ ६५७ ॥ २०

## र[2]-अज-आ नः अददत [3]ईसौख्यम् ॥ ६५८-६६१ ॥

रो-रविः अजः-स्मरः अः-कृष्णः, ततो द्वन्द्वे कृते राजाः-रवि-स्मर-कृष्णाः नः-अस्मभ्यं १ अस्माकं २ वा [4]ईसौख्यं अददत-अदुरित्यर्थः ॥ २ ॥ एवं हे र!-हे अग्निदेवते! अजाः-छागाः, हुता इति शेषः, नः-अस्मभ्यं १ अस्माकं २ वा [5]ईसौख्यं-स्वर्गादिसौख्यं राज्यादिसौख्यं वा अददत-अदुरित्यर्थः। पूर्वमी० ॥ ४ ॥ इदं अग्निहोतृ(त्रि?)वाक्यम्। तेषां हि अयं अभिप्रायः-अजादिहोमात् स्वर्गादिसुखं प्राप्यते ॥ ४ ॥ सर्वे० ॥ ६६१ ॥ २५

---

१ 'रम्भकोशे' इति ख-पाठः। २ अर्थान्तरे तु 'र! अजाः नः०' इति पाठः। ३-४-५ 'इसौख्यम्' इति ख-पाठः।

† अनेन चिह्नेन सूच्यते यदुतार्थान्तरे ईकारस्थाने इकारः इकारस्थाने ईकारो वा ज्ञेयः।

## राजानः अददत [1]ईसौख्यम् ॥ ६६२–६६३ ॥

राजानो–नृपाः ईसौख्यं–लक्ष्मीसौख्यं इसौख्यं–कामसौख्यं च अददत–अदुरित्यर्थः ॥ २ ॥ सर्वे० ॥ ६६३ ॥

## राजानः! दद तेसौख्यम् ॥ ६६४ ॥

५ हे राजानः!–हे नृपाः! यूयमिति क्रियासामर्थ्याद् गम्यम्। 'तेसौख्यं दद' ता–लक्ष्मीः इः–कामः तयोः सौख्यं तेसौख्यं दद–अदद्ध्वमित्यर्थः। अत्र ददेति परोक्षामध्यमपुरुषबहुवचने रूपम्। एवमग्रेऽपि ज्ञेयम्। सर्वे० ॥ ६६४ ॥

## र-अ-अः जा! नो ददते [2]सौख्यम्? ॥ ६६५–६६६ ॥

हे जाः–हे जेतृपुरुषाः! रः अर्थात् अग्निदेवः अः–कृष्णः अः–गरुडः। ततो द्वन्द्वे १० कृते राः–अग्नि-विष्णु-गरुडाख्या देवाः नो–न सौख्यं सुखं ददते? अपि तु ददते इत्यर्थः। एवं नो–न असौख्यं ददते ॥ २ ॥ सर्वे० ॥ ६६६ ॥

## राजानः! अददत [1]इसौख्यम् ॥ ६६७–६७२ ॥

हे राजानः!–हे चन्द्रमसः! भवन्त इति शेषः क्रियासामर्थ्याद् गम्यः इसौख्यं–कामसौख्यं अददत–अदुरित्यर्थः। संयोगिनीनामिति शेषः ॥ १ ॥ एवं ईसौख्यं–लक्ष्मीं १५ (लक्ष्मीसुखं) अददत। देवत्वेन स्वसेवाजुषां लक्ष्मीसौख्यदानत्वात् तेषाम्। अत्र चन्द्रमसां बहुत्वं जैनमतमाश्रित्य—

> "दो ससि दो रवि पढमे दुगुणा लवणम्मि धाइय(यई?)संडे।
> बारस ससि बारस रवि तप्पभिइ निद्दिट्ठससिरविणो ॥ १ ॥
> तिगुणा पुव्विल्लजुया अणंतराणंतरम्मि खित्तम्मि।
> २० कालोए बायाला विसत्तरी पुक्खरद्धम्मि ॥ २ ॥"

इत्यादिप्रकारेणासङ्ख्येयत्वं चन्द्रमसाम् ॥ सर्वे० ॥ २ ॥ एवं हे राजानः!–हे यक्षाः! भवन्त इति शेषः ईसौख्यं इसौख्यं वा अददत, अदुरित्यर्थः ॥ २ ॥ अर्थयोजना स्वयं कार्या। एवं हे राजानः!–हे यमाः! भवन्तः ईसौख्यं १ इसौख्यं वा २ अददत? अपि तु नेत्यर्थः ॥ एवं ॥४॥ सर्वे० ॥ ६७२ ॥

---

१ छाया—

> द्वौ शशिनौ द्वौ रवी प्रथमे द्विगुणा लवणे धातकीखण्डे।
> द्वादश शशिनो द्वादश रवयः तत्प्रभृति निर्दिष्टशशिरवयः ॥
> त्रिगुणाः पूर्वीययुता अनन्तरानन्तरे क्षेत्रे।
> कालोदधौ द्विचत्वारिंशद् द्वासप्ततिः पुष्करार्धे ॥

२ 'कुया' इति ख–पाठः।

## राजानोऽद्दत ई सौख्यम् ॥ ६७३ ॥

राजानो–नृपाः ई–लक्ष्मीं च पुनः सौख्यं–सुखं अददत ॥ १ ॥ एवं राजानो–नृपाः इं–कामं सुखं (सौख्यं ?) यथा स्यात् तथा अददत। धातूनामनेकार्थत्वात् प्रमदाजनं कामवन्तं कृतवन्त इत्यर्थः। अत्र चित्रादित्वादनुस्वारागमनगमनयोर्न विशेषः। यदवादि (श्रीवाग्भटैः) श्रीवाग्भटालङ्कारे ( श्लो० २० )— ५

> “यमक-श्लेष-चित्रेषु, बवयोर्डलयोर्न भित्।
> नानुस्वार-विसर्गौ तु, चित्रभङ्गाय सम्मतौ ॥ १ ॥”

इत्यादि। एवमग्रेऽपि। नन्वत्र चशब्दस्य कथमसतोऽपि ग्रहणम् ? सत्यमाह भवान्। तथापि महाग्रन्थान्तरे प्रयोगदर्शनात् युक्तम्। यदुक्तं श्रीहैमबृहद्वृत्तिसारोद्धार-कक्षपुटे— १०

> “[1]यथा अहर्नयमानो, गामश्वं पुरुषं पशुम्।
> वैवस्वतो न तृप्यति, सुराया इव दुर्मदी ॥१॥” ॥ ६७३ ॥

## राजानोऽददत ई सौख्य ! ॥ ६७४–६८५ ॥

हे सौख्य !–सौख्यसौख्यवतोरभेदोपचारात् हे सौख्यवत्पुरुष ! राजानो–नृपाः १ चन्द्राः २ यक्षाः ३ यमाः ४ वा ई–लक्ष्मीं इं–कामं वा अददत। शेषं पूर्ववत् ॥ ८ ॥ एवं १५ ई इति इ इति वा पादपूरणे। राजानो–नृपाः १ चन्द्राः २ यक्षाः ३ यमाः ४ सौख्यं–सुखं अददत। अर्थयोजना०। पूर्वोक्त ८ मीलने ॥ १६ ॥ सर्वे० ॥ ६८५ ॥

## राजानः ! दद तेसौख्य ॥ ६८६–६८९ ॥

हे राजानः !–हे नृपाः ! १ चन्द्राः ! २ यक्षाः ! ३ यमाः ! ४ वा। यूयमिति शेषः। ‘तेसौख्यं’ ता–लक्ष्मीः इः–कामः तयोः सौख्यं तेसौख्यं दद इति ४। अर्थयोजना स्वयं २० विधेया ॥ ४ ॥ सर्वे० ॥ ६८९ ॥

## रा जा नो ददत [2]ईसौख्यम् ॥ ६९०–६९५ ॥

जा–जेतारः पुरुषाः नः–अस्मभ्यं १ अस्माकं २ वा नो–न वा ३ ईसौख्यं–लक्ष्मी-सौख्यं १ इसौख्यं–कामसौख्यं २ वा अददत ॥ ६ ॥ अर्थयोजना स्वयं०। किं० ? ‘राः’ राजन्त इति राः। सर्वे० ॥ ६९५ ॥ २५

## रा जाः ! नो दद तेसौख्यम् ॥ ६९६–६९७ ॥

हे जाः ! यूयं तेसौख्यं–लक्ष्मीकामसुखं नो–न दद। अथवा नो–न दद ? अपि तु अदद्ध्वमित्यर्थः। अर्थयो० २। किं० ? ‘राः’ पूर्ववत्। सर्वे० ॥ ६९७ ॥

---

१ ‘यथाहयतंयमानो’ इति ख–पाठः। २ अर्थान्तरे ‘सौख्यं’ इति पृथक् पदं ज्ञेयम्।

## राजा नोऽददत †इसौख्यम् ॥ ६९८–७०० ॥

राजाः–यतयः, व्युत्पत्त्यादि पूर्ववत्, नः–अस्मभ्यं १ अस्माकं २ वा ईसौख्यं अददत। अथवा राजा–यतयो नो–न इसौख्यं–कामसौख्यं अददत ॥ ३ ॥ सर्वे० ॥ ७०० ॥

## [2]लाजानो ददते सौख्यम्* ॥ ७०१–७१४ ॥

रलयोरैक्यात् लाजाः–तन्दुलाः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं–सुखं ददते। अत्र केनचिदजीर्णतन्दुलेन जीर्णतन्दुलस्य पुंसः पृष्टं यदुत भो! युष्माकं तन्दुलाः कीदृशाः? ततस्तैरुक्तमिदं वचनम् ॥ २ ॥ एवं लाजाः–तन्दुलाः नः–अस्मभ्यं १ अस्माकं २ वा असौख्यं ददते। इदं तद्विपरीतजनानां वचनम्। सर्वे० ॥४॥ एवं लाजाः नो–न सौख्यं १ असौख्यं २ वा ददते। अर्थयोजना स्वयं कार्या ॥ २ ॥ पूर्व ४ मीलने ॥ ६ ॥

एवं लाजाः–तन्दुलाः हे नः!–हे पुरुष! सौख्यं १ असौख्यं २ वा ददते। अर्थयो० पूर्व ६ मीलने ॥ ८ ॥

एवं "नः पुनर्बन्धबुद्धयोः" इति वचनात्। उ इति पादपूरणे सम्बोधने वा। हे न!–हे बुद्ध! लाजाः–तन्दुलाः सौख्यं १ असौख्यं २ वा ददते। तदभिलाषुकाणां अनभिलाषुकाणां च ॥ पूर्व८मीलने ॥ १० ॥

एवं नः–अस्माकं लाजाः अस्मदीयतन्दुलाः सौख्यं १ असौख्यं २ च ददते। अर्थयो०। पूर्व १० मीलने ॥ १२ ॥

एवं लाजानां तन्दुलानां अनः–शकटं लाजानः–तन्दुलशकटं सौख्यं ददते। अप्राप्ततन्दुलस्येति शेषः। एवं लाजानः–तन्दुलशकटं असौख्यं ददते तथाविधानां केषाञ्चित् ॥ २ ॥ पूर्व १२ मीलने ॥ १४ ॥ सर्वे० ॥ ७१४ ॥

## लाजा [3]नो अददत †ईसौख्यम् ॥ ७१५–७३६ ॥

लाजाः–तन्दुलाः नः–अस्मभ्यं १ अस्माकं २ वा ईसौख्यं–लक्ष्मीसौख्यं ऋद्धिसुखं अददत–अदुरित्यर्थः। तन्दुलेभ्यो हि लक्ष्मीसौख्यं भवत्येवेति अर्थयोजना। अन्यथा वा यथासम्भवं विधेया ॥ २ ॥ एवं लाजा नः–अस्मभ्यं १ अस्माकं २ वा इसौख्यं–कामसुखं अददत–अदुरित्यर्थः। अर्थयो०। २ (पूर्व)मीलने ॥४॥ एवं लाजा नो–न ईसौख्यं इसौख्यं वा अददत। अर्थयो० २। पूर्व० ४ मीलने ॥ ६ ॥ एवं लाजाः–तन्दुलाः नः–अस्मभ्यं १ अस्माकं २ वा ई–लक्ष्मीं इं–कामं सुखं यथा स्यात् तथा अददत–अदुः। अर्थयो०। ४। पूर्व ४ मीलने ॥ ८ ॥ एवं नो–न ई–लक्ष्मीं चकारस्य पूर्वोक्तरीत्या सौख्यं च अददत। एवं कामवाचिना इशब्देन सममपि अर्थः कार्यः। २। पूर्व ८ मीलने ॥ १० ॥ एवं

---

१ 'यतिनः' इति ख-पाठः। २ अर्थान्तरेषु 'नः!', 'न! उ', 'लाजा–अनः' इति। ३ अर्थान्तरयोजना पूर्ववत्।

हे नः!–हे पुरुष! लाजा ईसौख्यं १ ई च पुनः सौख्यं वा अददत। १। एवं इसौख्यं १ इं च पुनः सौख्यं वा अददत ॥ ४ ॥ अर्थयो०। पूर्व १० मीलने ॥ १४ ॥ एवं उ इति सम्बोधने हे न!–बुद्ध! लाजा ईसौख्यं १ ई च पुनः सौख्यं वा २ अददत। एवं इसौख्यं इं–कामं सौख्यं–सुखं च वा अददत। अर्थयो० ४। पूर्व १४ मी० ॥१८॥ एवं नः–अस्माकं लाजाः अस्मदीयतन्दुलाः ईसौख्यं १ इसौख्यं वा २ अददत अदुरित्यर्थः २। पूर्व १८ मीलने ॥ २० ॥ एवं लाजानः–तन्दुलशकटं ईसौख्यं इसौख्यं वा २ अददत अदुः। पूर्व २० मीलने ॥ २२ ॥ एवं सर्वमीलने ॥ ७३६ ॥

## लाजा! नो दद तेसौख्यम् ॥ ७३७–७३८ ॥

हे लाजाः!–हे तन्दुलाः! यूयं तेसौख्यं–लक्ष्मी-कामसुखं नो–न दद। अथवा नो–न दद? अपि तु अदद्ध्वमित्यर्थः ॥ २ ॥ सर्वे० ॥ ७३८ ॥

## लाजा नो ददते सौख्यम् ॥ ७३९–७७६ ॥

एवं यथा सप्तत्रिंशदर्थाः तन्दुलवाचिना लाजशब्देन पूर्वं प्रदर्शिताः। तथा "लाजा भ्रष्टधान्ये स्युरक्षते" इति अनेकार्थतिलकवचनात् लाजा–भृष्टधान्यानि तद्वाचिनाऽपि लाजशब्देन सप्तत्रिंशदर्थाः कार्याः। यथा लाजा–भृष्टधान्यानि नः–अस्मभ्यं १ अस्माकं वा २ सौख्यं ददते इत्यादि। एवं सर्वेऽपि ॥ ७७६ ॥

## लाज-अनो ददते सौख्यम्* ॥ ७७७–७७८ ॥

"लाजः स्यादार्द्रतन्दुले। लाजास्तु भृष्टधान्ये स्युर्लाजं पुनरुशीरके" इति श्रीहैमानेकार्थ( का० २ श्लो० ८९–९०)वचनात् लाजानि–वालकाः तेषां अनः–शकटं लाजानः–वालकशकटं सौख्यं असौख्यं च ददते। भोगिनां योगिनां चेत्यर्थयोजना। सर्वे०॥७७८॥

## लाज-अनः अददत †ईसौख्यम् ॥ ७७९–७८० ॥

लाजानो–वालकशकटं ईसौख्यं–लक्ष्मीसुखं १ कामसुखं २ (वा) अददत–अदात्। अर्थयो० ॥ २ ॥ सर्वे० ॥ ७८० ॥

## लाजाणः ददते[1] सौख्यम्* ॥ ७८१–७९६ ॥

लाजाः–तन्दुलास्तान् अणति–गच्छति गत्यर्थानां प्राप्त्यर्थत्वात् प्राप्नोतीति लाजाणः। अच्प्रत्ययः तन्दुलप्रापकः। एवंविधः कोऽपि जनः सौख्यं १ असौख्यं २ च ददते। अर्थयो० ॥२॥ एवं लाजाणः ईसौख्यं इसौख्यं वा अददत। पूर्व २ मी० ॥ ४ ॥ एवं भृष्टधान्यप्रापकवाचिनाऽपि लाजाणशब्देन ४ अर्थाः कार्याः। यथा लाजाणः–भृष्टधान्यप्रापकः सौख्यं असौख्यं च ददते इत्यादि पूर्व ४ मी० ८। एवं वालकप्रापकवाचि-

---

१ अर्थान्तरे अददत ईसौख्यम्।

[illegible] [illegible]शब्देन ४ अर्थाः कार्याः । पूर्वं ८ मी० ॥१२॥ एवं लाजाः–आर्द्रतन्दुलाः पृथुकाः इत्यर्थः तान् अणतीति लाजाणः–पृथुकप्रापको जनः सौख्यं १ असौख्यं २ वा ददते । एवं पूर्ववत् ४ पूर्वं १२ मी० १६ । सर्वे० ॥ ७९६ ॥

### राजा अणः ददते सौख्यम्* ॥ ७९७–८०० ॥

५ अणः–शब्दः सौख्यं असौख्यं च ददते । किं०? 'राजा' रञ्जयति जनमनांसीति राजा, मधुरगीतादिध्वनिरित्यर्थः । एवं ईसौख्यं इसौख्यं च अददत । अर्थयो० ॥ ८००॥

### ला जा-नो! ददते सौख्यम्* ॥ ८०१–८०४ ॥

"जाया जनन्योर्जाबन्तः" इति श्रीविश्वशम्भु(श्लो० ३५)वचनात् जाया–जनन्याः नुः–स्तुतिर्यस्य स जानुः; अथवा जया–मात्रया हेतुभूतया नुः–स्तुतिर्यस्य स जानुः; १० अथवा जयेन आ–सामस्त्येन नुः–स्तुतिर्यस्य स जानुस्तत्सम्बोधने हे जानो! । "लौ महेन्द्रे मृते गत्यां, ला च लक्ष्मीर्लमम्बरे" इति विश्वशम्भु(श्लो० १०४)वचनात् ला–इन्द्राः सौख्यं १ असौख्यं २ च ददते। इदं शचीनां बलादीनां च वचनम् ॥२॥ एवं ला–इन्द्राः हे जानो! ईसौख्यं इसौख्यं च अददत २ ॥ पूर्वं २ मी० ४ ॥ एवं सर्वे० ॥८०४॥

### ला! जाः नो दद तेसौख्यम्* ॥ ८०५–८१० ॥

१५ हे लाः!–हे इन्द्राः! यूयं तेसौख्यं–लक्ष्मी–कामसौख्यं नो दद ॥ १ ॥ एवं नो–न दद? अपि तु ददध्वमित्यर्थः ॥ २ ॥ किं० लाः? 'जाः!' प्रतिपक्षजेतारः! ॥२॥ एवं हे लाः!–हे इन्द्राः! जाः–जेतारः पुरुषाः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं २ वा ददते । अर्थयो० ॥४॥ पूर्वं २ मी० ॥ ६ ॥ सर्वे० ॥ ८१० ॥

### ला! जा नो ददते असौख्यम् ॥ ८११–८१५ ॥

२० हे लाः!–हे इन्द्राः! जा–जेतारः–अस्मत्पराभवकारिणः प्रतिपक्षाः नः–अस्मभ्यं १ अस्माकं २ वा असौख्यं ददते । इदं पराभिभूतदेवानामिन्द्रं प्रति वचनम् ॥२॥ एवं नो–न सौख्यं ददते १ ॥३॥ एवं हे जाः!–हे जेतृपुरुषाः! लाः–इन्द्राः नो–न सौख्यं ददते । इदं बलादीनां वचनम् । एवं नो–न असौख्यं ददते । इदं शचीनां वचनम् ॥२॥ पूर्वं ३ मी० ५ ॥ सर्वे० ॥ ८१५ ॥

### २५ ला ज! आ नो ददते सौख्यम्* ॥ ८१६–८१९ ॥

"ला च लक्ष्मीर्लमम्बरे" इति विश्वशम्भु(श्लो० १०४)वचनात् ला–लक्ष्मीः । हे ज!–हे जेतृपुरुष! आ इति सम्बोधने । नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं असौख्यं वा २ ददते । इदं भोगिनां योगिनां च वचनम् ॥४॥ सर्वे० ॥ ८१९ ॥

---

१ 'ज–आ–नो!' इत्यर्थान्तरे । २ 'महेन्द्रे लो' इति पाठान्तरम् । ३ 'ला आ! इत्यर्थान्तरे' ।

## लाः जाः नो ददते सौख्यम्* ॥ ८२०–८२९ ॥

"लः स्याद् द्रुमशाखायां" इति कालिदासवचनात् लः–द्रुमशाखा तत्र अतन्ति–सततं गच्छन्तीति लाः–कपयः हे जाः! नो–न सौख्यं १ असौख्यं वा २ ददते। एवं ले–अम्बरे अटन्तीति लाः–खेटाः। हे ज!–हे जेतृपुरुष! आः इति पादपूरणे। नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं वा २ ददते ॥ ४ ॥ एवं नः–अस्मभ्यं १ अस्माकं वा २ ईसौख्यं इसौख्यं २ वा अददत ॥ ४ ॥ सर्वे० ८ ॥ पूर्व १२ मीलने ॥२०॥ सर्वे० ८२९ ॥

## लाः! ज-अनः ददते सौख्यम्* ॥ ८३०–८४१ ॥

(हे) लाः!–हे इन्द्राः! १ हे खेटाः! २ (वा) जानां–जेतृपुरुषाणां अनः–शकटं जानः सौख्यं असौख्यं च ददते ॥ सर्वे० ४ ॥ एवं जायाः–जनन्या वा अनः–शकटं जानः सौख्यं १ असौख्यं २ च ददते। सम्बोधनपदद्वयं पूर्ववत् ॥८॥ पूर्व ४ मी० १२। सर्वे० ८४१ ॥ १०

## ल-अजाः नो ददते सौख्यम्* ॥ ८४२–८७७ ॥

अजन्ति–क्षिपन्तीति अजाः–क्षेपकाः, लस्य–इन्द्रस्य अजाः–क्षेपकाः लाजाः। ये केचन एवंविधाः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं २ वा ददते ॥ ४ ॥ अर्थयोजना स्वयं०। एवं लायाः–लक्ष्म्या अजाः–क्षेपकाः लाजाः–लक्ष्मीतिरस्कारकारिणः पुरुषाः नः–अस्माकं १ अस्मभ्यं २ वा सौख्यं १ असौख्यं २ वा ददते। अर्थयो०। पूर्व १५ ४ मी० ८ ॥ एवं ले–आकाशे अजन्ति–गच्छन्तीति लाजाः–ग्रहाः नः–अस्मभ्यं० इत्यादि पूर्ववत् ४ कार्याः। पूर्व ८ मी० १२ ॥ एवं लाः–द्रुमशाखाः तासु अजन्ति–गच्छन्ति–एकस्याः शाखायाः सकाशात् अन्यस्यां शाखायां कुर्दनेन यान्तीति लाजाः–वानराः नः–अस्मभ्यं० इत्यादि ४ कार्याः। पूर्व १२ मी० १६ ॥ एवं १६ अपि अर्थाः ईसौख्यं १ इसौख्यं वा २ अददत–अदुरित्यर्थः। इत्येवंरीत्या द्विगुणाः कार्या जाताः ॥३२॥ एवं 'ला आदाने' २० (पा० धा १०५८) इत्युक्तत्वात् लाधातुः। हे जाः! नो–न असौख्यं सौख्यं २ वा ददते इति वैयाकरणानां अवैयाकरणानां च वचनं ॥ २ ॥ एवं राधातुरपि २ ॥ ४ ॥ पूर्व ३२ मी० ३६ ॥ सर्वेऽपि सङ्कलिताः ॥ ८७७ ॥

## ल–अज! अनः ददते सौख्यम्* ॥ ८७८–९२७ ॥

लस्य–इन्द्रस्य अजः–क्षेपकः लाजः १; अथवा लायाः–लक्ष्म्याः अजः–क्षेपकः लाजः २५ २; एवं राजः–कामक्षेपकः ३; एवं राजः–हर्षक्षेपकः ४; रा–रमणी तस्याः अजः–क्षेपकः वा राजः ५; तत्सम्बोधने हे राज! ॥ ५ ॥ अनः–शकटं सौख्यं १ असौख्यं २ वा ददते। ममेति शेषः। अयमर्थः–यो हि कोऽपि इन्द्रमवगणयति तं प्रति कस्यचित् प्रियशकटस्य अप्रियशकटस्य वा पुरुषस्योक्तिरियं जाताः ॥१०॥ एवं हे लाज! ५ व्युत्पत्त्यादि पूर्ववत्।

---

१ 'ज! आः' इत्यर्थान्तरेषु। २ 'राया' इति ग-पाठः।

"नः पुनर्बन्धबुद्धयोः" इति (एकाक्षर०) वचनात् अनः–अबन्धः सौख्यं १ असौख्यं २ च ददते २ ॥१०॥ इमानि [1]प्रियबन्धाऽप्रियबन्धयोर्वचनानि । पूर्व १० मी० २० ॥

## ( लाजाः! नो ददते सौख्यम्* )

एवं हे लाजाः! ५ व्युत्पत्त्यादि पूर्ववत् । नो–बुद्धोऽवगततत्वः सौख्यं १ असौख्यं ५ २ ददते । इमानि ज्ञानिमूर्खयोर्वचनानि २ ॥ १० ॥ पूर्व २० मी० ३० ॥

## ( लाजाः! ना उ ददते सौख्यम्* )

हे लाजाः! ५ उ इति आमन्त्रणे । ना–पुमान् सौख्यं १ असौख्यं २ च ददते । अर्थयोजना स्वयं कार्या ॥ १० ॥ पूर्व ३० मी० ४० ॥

## ( लाजाः! नो दद! तेसौख्यम् )

१० एवं लाजाः! राजाः! वा ५ यूयं तेसौख्यं–लक्ष्मीकामसुखं नो–न दद ५ । एवं नो न दद? अपि तु अदद्ध्वमित्यर्थः ॥ १० ॥ पूर्व ४० मी० ५० ॥ सर्व० ॥ ९२७ ॥

## ल-अ–अजाः नो ददते सौख्यम्* ॥ ९२८–९३३ ॥

"ल इन्द्रे चलने स्मृतः" इति तिलकानेकार्थवचनात् लेन–चलनेन गत्या अस्य–वायोः अजाः–क्षेपकाः लाजाः 'विशेषणाद् विशेष्यप्रतीतेः' (इति न्यायात्) लाजाः–अश्वाः १५ नः–अस्मभ्यं १ अस्माकं २ वा नो–न सौख्यं १ असौख्यं २ वा ददते । इदं प्रियाश्वानां तद्विपरीतानां च पुरुषाणां वचनं ॥ ६ ॥ सर्व० ॥ ९३३ ॥

## ल-अ-आ जा! नो ददते सौख्यम्* ॥९३४–९३५ ॥

ले–आकाशे अतन्ति–गच्छन्ति अटन्तीति वा लाः एवंविधाः आः–चन्द्राः लाजाः । हे जाः!–हे जेतारः! पुरुषाः! लाजाः नो–न सौख्यं ददते । इदं विरहिण्या वचनम् । २० एवं नो–न असौख्यं ददते । इदं संयोगिन्या वचनम् ॥ २ ॥ सर्व० ॥ ९३५ ॥

## राजा नो ददते अः सौख्यम्* ॥ ९३६–९६८ ॥

अः–कृष्णः नः–अस्मभ्यं १ अस्माकं २ वा सौख्यं १ असौख्यं २ च ददते । किं० अः? 'राजा' स्वामी ॥४॥ एवं शिव१वायु२ब्रह्म३चन्द्र४अग्नि५वाचकेनाऽपि अशब्देन समं प्रत्येकं ४ अर्थाः कार्याः । यत्र स्वाम्यर्थो न सम्भवति तत्र राजते शोभते इति २५ कर्तव्यम् । ततः पञ्चगुणिताः चत्वारो जाताः २० ॥ पूर्व ४ मी० २४ ॥ सर्व० ॥ ९५६ ॥ एवं अर्हत्१सिद्ध२वाचकेनाऽपि अनिरुद्ध(३)वाचकेनाऽपि अशब्देन समं प्रत्येकं चत्वारः चत्वारोऽर्थाः कार्याः । त्रिगुणिताः जाताः १२ ॥ सर्व० ॥ ९६८ ॥

---

१ 'प्रियबन्धाबन्धयोः' इति ग–घ–पाठः । २ नो–न ३ वा इति प्रतिभाति ।

## राजा नः अददत इः सौख्यम् ॥ ९६९-९८९ ॥

इः-कामः नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं अददत-अदात् । किं० इः? 'राजा' रञ्जयति कामिजनमनांसीति राजा। राजते वा राजा। एवं इः-कामः नः-अस्माकं सौख्यं अददत? अपि तु नेति काक्वा व्याख्येयम् । आरक्तविरक्तयोर्वचनमेतत्। एवं अस्य-ईश्वरस्य अपत्यं इः-विनायकः १ एवं अस्य-वायोः अपत्यं इः-हनुमान् पवनपुत्रत्वात् ५ तस्य २, एवं अस्य-चन्द्रस्य अपत्यं इः-बुधः ३, एवं अस्य-अग्नेः अपत्यं इः-अग्निपुत्रः ४ एवं अस्य-गरुडस्य अपत्यं इः-गरुडपुत्रः ५, एवं अस्य अर्हतोऽपत्यं इः-गणधरादिः ६ इत्यर्थवाचिनाऽपि इशब्देन समं प्रत्येकं त्रयः त्रयोऽर्थाः कार्याः। जाताः षड्भिर्गुणिताः १८। पूर्वं ३ मी० २१। अर्थयोजना स्वयं कार्या। अत्र सर्वत्र विसर्गलोपः चित्रादित्वात् न दोषाय ॥ सर्वे० ॥ ९८९ ॥ १०

## राज! आ नः अददत ईः सौख्यम् ॥ ९९०-१००४ ॥

हे राज! हे लाज! वा । पूर्वोक्तार्थपञ्चकमध्ये कस्यापि सम्बोधनम् । आ इति सम्बोधने पादपूरणे वा । ईः-लक्ष्मीः नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं अददत-ददते स्म। इदं तथाविधपुरुषं प्रति लक्ष्मीवाञ्छकानां वचनम् । एवं नः-अस्माकं सौख्यं अददत? अपि तु न इति काक्वा व्याख्येयम् । अर्थाः ३ । एवं भूमि१मदिरा२मोह- १५ ३ महानन्द ४ वाचिनाऽपि ईशब्देन समं अर्थत्रयं २ कार्यम्। जाताः १२ ॥ पूर्वं ३ मी० १५॥ सर्वे० १००४ ॥

* * * *

॥ ऐँ श्रीसर्वज्ञाय नमः ॥

अथ पुनः प्रकारान्तरेण खण्डनया अर्थानाह—

## राजा अ! नोदद! ते सौख्यम् ॥ १-१४० ॥ २०

अटति अतति वा अः, कायति कामयते वा कः, भातीति भं-नक्षत्रं इति 'क्वचित्' (सिद्ध० ५-१-१७१) सूत्रे बृहद्वृत्तिव्याख्यानात् अटति-अतति-सततं गच्छति संसारे इति अः-प्राणी अर्थात् कश्चिन्नरादिः तत्सम्बोधनं हे अ!। अथास्यैवासाधारणविशेषणमाह-हे नोदद! नोदनं नोदः-प्रेरणं भो त्वमिदं कार्यं कुर्वित्यादिरूपः तं ददातीति नोददः। 'असाधारणविशेषणात् विशेष्यप्रतीतेः' इति न्यायात् एवंविधः कोऽपि प्रेरणादायकः पुरुष- २५ विशेषस्तत्सं० हे नोदद! ते-तुभ्यं राजा-नृपतिः सौख्यं-सुखं, ददात्विति शेषः। इदमाशीर्वचनम्। अत्र सप्तसु अर्थेषु नोददशब्दः प्रेरणादायको ज्ञेयः। हे अ! नोदद! ते-त्वया सौख्यं दीयतामित्यर्थात् अर्थप्रकरणाद् वा गम्यम्। अत्र युष्मच्छब्दस्य तृतीयैकवचने ते इत्यादेशः। यदुक्तम्—

"वैपरीत्यविधानेन, नियमो नेष्यते बुधैः ।
अतः सर्वविभक्तीनां, भवन्ति वसनसादयः ॥"

इत्यादि । तथा—"गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां" (मेघदूते पू० श्लो० ७) इत्यादि महाकविश्रीकालिदासप्रयोगदर्शनाच्च । अथवा "ते मे त्वया मयाऽर्थे सातत्येऽपि ५ नित्यसहार्थयोरपि" इति अव्ययवृत्तिव्याख्यानात् ते इति त्वयाऽर्थे निपातः । एवमग्रेऽपि सदाऽनुसर्तव्यम् । किं० त्वया? 'राजा' राजते इति राट् तेन राजा २ । हे अ! नोदद! ते-त्वया राजा सौख्यं नीयतामिति क्रियापदमर्थाक्षेपात् लभ्यम् । अत्र 'णीञ् प्रापणे' (पा० धा० ९०१) इत्यस्य धातोर्द्विकर्मकत्वात् कर्मद्वयम् ॥ ३ ॥ हे अ! नोदद! ते-तव राजा सौख्यं, ददात्विति शेषः । इदमप्याशीर्वचनम् ॥ ४ ॥ हे अनोदद! ते-तव १० राजा-भवदीयो नृपः सौख्यं, दत्तामिति शेषः ॥ ५ ॥ हे अ! नोदद! ते-तव राजा सौख्यं वर्तते, सौख्यहेतुत्वात् सौख्यकारकत्वात् तदभेदकत्वेन सौख्यमेव, मुखचन्द्र इत्यादि कविशिष्यो(क्षो?)दाहरणात् ॥६॥ हे अ! नोदद! ते-तव राजा-भवदीयो नृपः सौख्यं साक्षात् सौख्यमेव, ममेति शेषः ॥ ७ ॥ एवं नञ्पूर्वेणापि प्रेरणादायकवाचिनोददपदेन पूर्वविधिना सप्तार्थाः कार्याः । यथा-हे अ! अनोदद!-हे अप्रेरणादायक! ते-तुभ्यं राजा- १५ नृपतिः सौख्यं-सुखं, ददातु इति शेषः । इत्यादि व्युत्पत्तिरर्थयोजना च स्वयं कार्या । सर्वे० ॥ १४ ॥

नोदनं नोदः-प्रेरणं तं दयते-पालयतीति नोददः-प्रेरणापालकः । अत्र हि केनापि कस्मैचित् प्रोक्तम्-भो महानुभाव! सुपात्राय दानं देहीति प्रेरणा चक्रे । ततस्तेनापि परमहितोपदेशत्वात् तथैवाकारितरां तस्मात् सोऽपि नोदद इत्युच्यते तत्सं० हे नोदद! अ २० इति अत्रापि विशेष्यसम्बोधनपदं कार्यम् । यथा—हे अ! हे नोदद!-प्रेरणापालक! ते-तुभ्यं राजा-नृपतिः सौख्यं ददात्वित्यादि दिग्मात्रेणापि प्रेरणापालकवाचिनोददपदेन केवलेन नञ्समासपूर्वेण च पूर्ववत् १४ अर्थाः कार्याः । सर्वे० ॥ २८ ॥ अत्र राजा अ! अनोदद! ते सौख्यं इत्यत्र पदमध्ये वारद्वयं "सवर्णे दीर्घः सह" (सारस्वते सू० ५२) इति सूत्रं स्मरणीयम् । एवमग्रेऽपि सर्वत्र ज्ञातव्यम् ॥ २८ ॥

---

१ इदं तु तृतीयं चरणं, सम्पूर्णं पद्यं तु यथा—

सन्तप्तानां त्वमसि शरणं तत् पयोद! प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥७॥"

२ 'त्वया गन्तव्येत्यर्थः' इति श्रीमल्लिनाथाः टीकायाम् ।

३-४ 'वाचिना दद०' इति ग-घ-पाठः ।

नोदं-प्रेरणं विवक्षितरूपं द्यति-खण्डयतीति सोऽपि नोददः-प्रेरणखण्डकः। केनापि कस्मैचिदुक्तं यदुत भो देवानुप्रिय! यत्यादिभ्यो दानं देहीति। ततस्तेनारुचित-तदीयवचनेन न कृतं तस्मात् सोऽपि नोददः। ततः हे अ! हे नोदद! ते-तुभ्यं राजा सौख्यं ददातु इत्यादि प्रकारेण पूर्ववदत्रापि १४ अर्थाः प्रेरणखण्डकवाचिनोददपदेन केवलेन नञ्समासपूर्वेण च कार्याः। सर्वे० ॥ ४२(२?) ॥ ५

नोदनं नोदः-प्रेरणं तेन तत्र दो-दानं यस्य यस्मात् यस्मिन् वा सोऽपि नोददः, यो हि स्वयमदाता सन् परप्रेरणया दानं ददाति सोऽपि नोदद इत्युच्यते। ततः हे अ! हे नोदद! ते-तुभ्यं राजा-नृपतिः सौख्यं ददातु इत्यादिना प्रकारेणापि १४ अर्थाः प्रेरणा-दानवाचिनोददपदेन केवलेन नञ्पूर्वेण च कार्याः। अर्थयोजनाऽपि स्वयं कार्या। अत्र दो दानवाचको ज्ञेयः। यदुक्तं श्रीविश्वशम्भुनाममालायां (श्लो० ६७)— १०

"दो दाने पूजने क्षीणे, दानशौण्डे च पालके।
देवे दीप्तौ दुराधर्षे"

इत्यादि। सुधाकलशोऽप्याह (श्लो० २४-२५)-

"दो दाने दायकेऽपि च।
दाने दातरि दा केचित् विदुर्दा छेदबन्धयोः" १५

इत्यादि। एवमग्रेऽपि यत्र कुत्रापि यदर्थवाचिनोदशब्दस्य कार्यं स्यात् तत्र सर्वत्रापि एतस्मात् स्थलात् तदर्थवाची दशब्दोऽनुसर्तव्यः। सर्वे अर्थाः ॥ ५६ ॥

नोदः-प्रेरणं तेन तस्मात् तस्मिन् वा दः-पूजनं यस्मात् यस्य यस्मिन् वा सोऽपि नोददः। यो हि परप्रेरणया गुर्वादीन् पूजयति (सोऽपि नोददः)। ततः हे नोदद! अ! ते-तुभ्यं राजा-नृपतिः सौख्यं ददातु इत्यादि पूर्ववदत्रापि १४ अर्थाः प्रेरणापूजनवाचिना २० नोददपदेन केवलेन नञ्पूर्वेण च कार्याः। सर्वे० ॥ ७० ॥

नोदे-प्रेरणे दः-क्षीणोऽशक्तो नोददः, यो हि प्रेरणं कर्तुमतीवाशक्तो वृद्धावस्थां प्राप्त इत्यर्थः, तत्सं० नोदद!। अ! ते-तुभ्यं राजा सौख्यं ददातु इत्यादिना पुनरपि १४ अर्थाः प्रेरणक्षीणवाचिना नोददपदेन केवलेन नञ्पूर्वेण च कार्याः। सर्वे० ॥ ८४ ॥

नोदः-प्रेरणं तेन तस्माद् वा दो-दानशौण्डः, यो हि स्वयं कीकटः[1] सन् परप्रेरणया २५ दानशौण्डो भवति सोऽपि नोदद इत्युच्यते, तत्सं० हे नोदद! अ!-प्राणिन्! ते-तुभ्यं राजा-नृपतिः सौख्यं ददातु इत्यादि १४ अर्थाः प्रेरणादानशौण्डवाचिनोददपदेन केवलेन नञ्पूर्वेण च कार्याः। सर्वे० ॥ ९८ ॥

नोदः-प्रेरणं तेन तस्माद् वा दः-पालकः, यः सोऽपि नोददः। यो हि स्वयं परम-पालयन् त्वममुं प्रतिपालयेति परप्रेरणया परं पालयति सोऽपि नोदद इत्युच्यते, ततस्तत्सं० ३०

१ दरिद्रः। उक्तं च अभि० (का० ३, श्लो० २२)-दरिद्री दुर्विधो दुःस्थो दुर्गतो निःस्व-कीकटौ।

हे नोदद! अ!–प्राणिन्! इत्यादि विधिना १४ अर्थाः प्रेरणापालकवाचिना नोददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ११२ ॥

नोदे–प्रेरणे दो–देवो यस्य सोऽपि नोददः। यस्य हि देवोऽपि कार्यावसरे त्वमेवं कुर्विति प्रेरणं करोति एवंविधो यः कोऽपि, अथवा नोदे–प्रेरणे द इव–देव इव यः सः ]
५ यो हि देववत् प्रेरणां विधत्ते तत्सं० हे नोदद! अ!–प्राणिन्! इत्याद्यर्थाः १४ पूर्ववदत्रापि एतदर्थद्वयवाचिना नोददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १२६[1] ॥

[2]( नोदः–प्रेरणं तेन तस्मिन् वा दो–दीप्तिर्यस्य सोऽपि नोददः। यो हि परप्रेरणया दीप्तिमानित्यर्थः। तत्सं० हे नोदद! अ!–प्राणिन्! इत्यादि १४ अर्थाः। पुनरपि प्रेरण-दीप्तिवाचिना नोददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १४० ॥)

१० अथ पुनः प्रकारान्तरेण अर्थानाह—

## राजा अ! अनोदद! ते सौख्यम्* ॥ १४१–६२३ ॥

अनः–शकटं ददातीति अनोदः–शकटदाता तं अनोदं–शकटदातारं प्रति ददातीति अर्थाक्षेपात् मूल्यं यच्छतीति अनोदद इत्युच्यते। अत्र हि केनचित् शकटार्थिना प्रोक्तं यदुत भो लोकाः! यो मह्यं शकटं ददाति तस्मै अहं मूल्यं यथायोग्यं दद्मि। ततः केनापि
१५ तस्मै शकटं दत्तं ततस्तेनापि तस्य मूल्यं दत्तम्, तस्मात् सोऽनोदद इत्युच्यते, तत्सं० हे अनोदद! अ!–प्राणिन्! ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादि ७ अर्थाः शकट-दातृदायकवाचिना अनोददपदेन कार्याः। सर्वे० ॥ १४७ ॥

अनः–शकटं ददातीति अनोदः, तमपि दयते–पालयतीति[4] अनोददः। अत्रापि केनचित् पथिश्रान्तेन प्रोक्तम्–यो हि मम श्रान्तस्य निषीदनाय शकटं ददाति तमहं याव-
२० ज्जीवं पालयामि। यावदहं अयं चाजीवावस्तावदेनं धनधान्यद्रव्याद्यवष्टम्भदानेन निर्वाह-यामि। ततः केनापि दत्तमनः तस्य, ततस्तेनापि स पालितः, तस्मात् सोऽनोदद उच्यते तत्सं० हे अनोदद! अ!–प्राणिन्! ते–तुभ्यं राजा सौख्यं ददातु इत्यादि ७ अर्थाः शकट(दातृ)पालकवाचिना अनोददपदेन कार्याः ॥ १५४ ॥

अनः–शकटं ददातीति अनोदः–शकटदाता, तमप्यनोदं द्यति–खण्डयतीति अनो-
२५ ददः। अत्र हि केनापि कारणेन केनापि राज्ञा इति मर्यादा कृता यदुत यः कोऽपि कस्मैचिदपि शकटं दास्यति तमहं हनिष्यामि, ततोऽवगणिततद्वचनेन केनापि शकटं कस्मैचिद् दत्तं, ततो जातप्रबलकोपेन तेन स मारितः, तस्मात् सोऽप्यनोदद इत्युच्यते, तत्सं० हे अनोदद! हे अ!–प्राणिन्! ते तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादि अर्थाः ७ शकटदातृमारक-वाचिना अनोददपदेन केवलेन कार्याः। सर्वे० ॥ १६१ ॥

---

१ '१४०' इति ख–पाठः। २ धनुश्चिह्नान्तर्गतः पाठः ख–प्रतौ नास्ति। ३ 'अत्रापि' इति ख–पाठः। ४ 'पालयते' इत्यधिकः ख–पाठः।

अनः–शकटं दयते–पालयति इति अनोदः–शकटपालकः, तं प्रति अर्थाक्षेपात् द्रव्यादि ददातीति अनोददः । अत्रापि मर्यादा कृता–यो मम शकटं पालयति–रक्षति तस्याहं धनादिकं दद्मि । ततः केनापि शकटं पालितं, ततस्तेनापि तस्य धनादि दत्तं, तत् सोऽप्यनोदद उच्यते, तत्सं० हे अनोदद ! । हे अ !–हे प्राणिन् ! ते–तुभ्यं इत्यादि ७ अर्थाः । सर्वे० ॥ १६८ ॥ ५

अनः–शकटं पालयतीति अर्थसामर्थ्याद् धातूनामनेकार्थत्वाद् वा बलाद् रक्षतीति अनोदः, तमपि द्यति–खण्डयति यः सोऽप्यनोददः । अत्र हि केनापि कस्यापि मन्दिरायां[1][2] निजशकटं रक्षणाय मुक्तमासीत्, ततः कियत्कालान्तरेण शकटस्वामिना तत्पार्श्वाच्छकटं[3] याचितं, ततस्तेन जातलोभेन रक्षितं, न तु दत्तम्, ततस्तेन रुष्टेन स मारितः, तस्मात् सोऽप्यनोदद उच्यते, तत्सं० हे अनोदद ! । हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः शकटर- १० क्षकमारकवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ १७५ ॥

अनः–शकटं द्यति–खण्डयति इति अनोदः, तमपि दयते–पालयतीति अनोददः । अत्रापि केनापि केलिप्रियेण प्रोक्तम्–भो बलिष्ठ ! यद्येतत् शकटं निजबलेन भङ्क्षि (भनक्षि ?) तदाऽहं यावज्जीवं पूर्वोक्तप्रकारेण त्वां पालयामि, ततस्तेन शकटं भग्नं, ततस्तेनापि स पालितः, तस्मात् सोऽप्यनोदद उच्यते तत्सं० इत्यादि ७ अर्थाः शकटखण्डकपालकवा- १५ चिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ १८२ ॥

अनः–शकटं द्यति–खण्डयति इति अनोदः–शकटखण्डकः, तमपि द्यति–खण्डयतीति अनोददः । अत्रापि केनापि शकटप्रियेण निजद्वेषिणं प्रत्युक्तम्–यदि त्वं शकटं भङ्क्ष्यसि तदाऽहं त्वामपि हनिष्यामि । ततस्तेन चटितप्रबलप्रकोपेन तच्छकटं भग्नम् । ततस्तेनापि स मारितः, तत्सं० हे अनोदद ! । अ !–प्राणिन् ! ते–तुभ्यं राजा–नृपतिः २० सौख्यं ददातु इत्यादि ७ अर्थाः शकटभञ्जकमारकवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ १८९ ॥

अनः–शकटं ददातीति अनोदः, तस्मै दो–दानं यस्य सोऽप्यनोददः, तत्सं० हे अनोदद ! । हे अ !–प्राणिन् ! ते–तुभ्यं राजा सौख्यं ददातु इत्यादि ७ पूर्ववत् कार्याः । अर्थयोजनादिकमपि स्वयं कार्यम् । सर्वे० ॥ १९६ ॥ २५

अनोदः–शकटदायकः, तस्य तस्मै वा दः–पूजनं यस्य सोऽप्यनोदद इत्युच्यते, तत्सं० हे अनोदद ! इत्यादि ७ अर्थाः पूर्ववत् कार्याः । सर्वे० ॥ २०३ ॥

अनोदः–शकटदायकः स चासौ दः–क्षीणश्च अनोददः तत्सं० हे अनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः पूर्ववत् कार्याः । सर्वे० ॥ २१० ॥

---

१ 'मन्दिरे' इति ख–पाठः । २ 'मन्दिरं मन्दिरा कुटिः' इति श्रीशब्दरत्नाकरे ( का० ४, श्लो० ३४ ) । ३ 'पश्चात्' इति ग–घ–पाठः ।

अनोदः-शकटदायकः स चासौ दो-दानशौण्डश्च अनोददः, तत्सं० हे अनोदद! । हे अ!-प्राणिन्! इत्यादि ७ अर्थाः पूर्ववत् कार्याः । सर्वे० ॥ २१७ ॥

अनोदः-शकटदायकः, स चासौ दः-पालकश्च अनोददः, तत्सं० हे अनोदद! हे अ!-हे प्राणिन्! इत्यादि ७ अर्थाः शकटदायकपालकवाचिना अनोददपदेन केवलेन ५ कार्याः । सर्वे० ॥ २२४ ॥

अनोदः-शकटदायकः, तद्वत् दो-दीप्तिर्यस्य सोऽप्यनोददः, तत्सं० हे अनोदद! हे अ!-हे प्राणिन्! इत्यादि ७ अर्थाः शकटदायकदीप्तिवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २३१ ॥

अनः-शकटं दयते-पालयतीति अनोदः, तस्मै दो-दानं यस्य सोऽप्यनोददः, १० तत्सं० हे अनोदद! हे अ!-प्राणिन्! ते-तुभ्यं राजा सौख्यं ददातु इत्यादि ७ अर्थाः शकटपालकदानवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २३८ ॥

अनोदाय-शकटपालकाय दः-पूजनं यस्य सोऽप्यनोददः, तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः शकटपालकपूजनवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २४५ ॥

१५ अनोदः-शकटपालकः, स चासौ दः-क्षीणश्च अनोददः, तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः शकटपालकक्षीणवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २५२ ॥

अनोदः-शकटपालकः, स चासौ दो-दानशौण्डोऽनोददः, तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः शकटपालकदानशौण्डवाचिना अनोददपदेन केवलेन २० कार्याः । सर्वे० ॥ २५९ ॥

अनोदः-शकटपालक एवंविधः कोऽपि, तद्वद् दो-दीप्तिर्यस्य सोऽप्यनोददस्तत्सं० हे अनोदद! इत्यादि ७ अर्थाः शकटपालकदीप्तिवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २६६ ॥

अनोदः-शकटखण्डकः, तस्मै दो-दानं यस्य सोऽप्यनोददस्तत्सं० इत्यादि ७ अर्थाः २५ शकटखण्डकदानवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २७३ ॥

अनोदः-शकटखण्डकः तस्मै तस्य तस्मात् तस्मिन् वा दः-पूजनं यस्य सोऽप्यनोददस्तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः शकटखण्डकपूजनवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २८० ॥

अनोदः-शकटखण्डकः, स चासौ दः-क्षीणः अनोददः, तत्सं० हे अनोदद! इत्यादि ३० ७ अर्थाः शकटखण्डकक्षीणवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २८७ ॥

अनोदः–शकटखण्डकः स चासौ दः–पालकः अथवा तस्य दः–पालकः, तत्सं० हे अनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः शकटखण्डकपालकवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ २९४ ॥

अनोदः–शकटखण्डकः कोऽप्येवंविधो बलिष्ठः, तद्वद् दो–दीप्तिर्यस्य सोऽप्यनोददः, तत्सं० इत्यादि ७ अर्थाः शकटखण्डकदीप्तिवा० कार्याः । सर्वे० ॥ ३०१ ॥ ५

अथ पुनः प्रकारान्तरेण अर्थानाह—

अनः–शकटं अर्थात् शकटरूपं दैत्यं (तं) द्यति–खण्डयति इति अनोदो–नारायणः। एवं अग्रेऽपि नारायणवाचि अनोदशब्दस्य व्युत्पत्तिः कार्या । तं दयते–पालयतीति अनोददः अर्थान्नन्दगोकुली । तेन हि बाल्यावस्थायां हरिः पालितो–निजगृहे रक्षितः पुत्रवदिति श्रुतिः । सम्बन्धस्तु शास्त्रान्तरादवसेयः । तत्सम्बोधनं हे अनोदद ! हे अ !–प्राणिन् ! ते– १० तुभ्यं राजा सौख्यं ददातु इत्यादि ७ अर्थाः नन्दगोकुलिवाचिनाऽनोददपदेन केवलेन कार्याः । अत्र 'अ' इति विशेष्यं(?) पूर्ववद् गण्यम् । ततः तेआदेशस्यावैषम्यम् । सर्वे० ॥३०८॥

अनोदवत्–नारायणवत् दो–दानं यस्य सोऽप्यनोददस्तत्सं० हे अनोदद ! इत्यादि ७ अर्थाः नारायणदानवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३१५ ॥

अनोदो–नारायणस्तस्य तस्मिन् वा दः–पूजनं यस्य सोऽप्यनोददः, तत्सं० हे १५ अनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः नारायणपूजनवाचिना अनोददपदेन के० कार्याः सर्वे० ॥ ३२२ ॥

अनोदवत्–नारायणवत् दो–दानशौण्डो यः सोऽप्यनोददः, तत्सं० इत्यादि ७ अर्थाः नारायणदानशौण्डवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३२९ ॥

अनोद एव–नारायण एव दो–देवो यस्य सोऽप्यनोददः, तत्सं हे अनोदद ! २० इत्यादि ७ अर्थाः नारायणदेववाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३३६ ॥

अनोदवत्–नारायणवत् दो–दीप्तिर्यस्य सोऽप्यनोददः, तत्सं० हे अनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः नारायणदीप्तिवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३४३ ॥

अनोदवत्–नारायण इव ददाति अर्थाद् दानं यच्छतीति अनोददः, एवंविधः २५ कोऽपि दाता, तत्सं० इत्यादि ७ अर्थाः नारायणसमदायकवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३५० ॥

अनोदो–नारायणस्तद्वद् दयते अर्थाद् दयावत्त्वेन परप्राणान् रक्षतीति अनोददः, तत्सं० हे अनोदद ! इत्यादि ७ अर्थाः नारायणपालकवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ३५७ ॥ ३०

---

१ 'अर्थदानं' इति ख–पाठः ।

अनोदो-नारायणस्तद्वत् द्यति अर्थादरीन् खण्डयतीति सोऽप्यनोददः, तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः पूर्ववत् कार्याः। सर्वे० ॥ ३६४ ॥

पुनः प्रकारान्तरेण अर्थानाह—

अः-कृष्णः तद्वन्नोदं-प्रेरणं ददातीति अनोददः, तत्सं० हे अनोदद! हे अ!-प्रा-
५ णिन्! इत्यादि ७ अर्थाः कृष्णप्रेरणदायकवाचिना अनोददपदेन केवलेन कार्याः। एवमग्रेऽपि अनोददशब्दस्य यथासम्भवं व्युत्पत्तिः कार्या। सर्वे० ॥ ३७१ ॥

अः-कृष्णस्तद्वन्नोदं अर्थात् परकृततिरस्काररूपं प्रेरणं द्यति-खण्डयतीति अनोददः तत्सं० हे अनोदद! इत्यादि ७ अर्थाः कृष्णप्रेरणखण्डकवाचिना अनोददपदेन केवलेन कार्याः। सर्वे० ॥ ३७८ ॥

१० अः-कृष्णः तद्वन्नोदं अर्थात् प्रेरणं अर्हत्प्रणीतधर्मोद्यमरूपं दयते-पालयतीति अनोददः तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः कृष्णप्रेरणपालकवाचिना अनोददपदेन केवलेन कार्याः। सर्वे० ॥ ३८५ ॥

अनोदो-हरिप्रेरणं भो त्वमिदं कार्यं कुर्वित्यादिरूपः, तं ददातीति अनोददः तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणदायकवाचिना अनोददपदेन के०
१५ कार्याः। सर्वे० ॥ ३९२ ॥

अनोदं-हरिप्रेरणं दयते-पालय[ती]ति यः सोऽप्यनोददः, तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणपालकवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ३९९ ॥

अनोदं-हरिप्रेरणं द्यति-खण्डय[ती]ति यः सोऽप्यनोददः, हर्याज्ञाखण्डकः कश्चिदित्यर्थः, तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हर्याज्ञाखण्डकवाचिना अनोददपदेन के०
२० कार्याः। सर्वे० ॥ ४०६ ॥

अनोदेन-हरिप्रेरणेन दो-दानं यस्य सोऽप्यनोददः। यो हि स्वयं दानमददत् हरिप्रेरणया[1] ददातीति ततस्तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणदानवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४१३ ॥

अनोदो-हरिप्रेरणं तेन दः-पूजनं त्वमिमं पूजयेति पूजास्वरूपं[2] यस्य सोऽनोददः।
२५ यो हि स्वयं गुर्वादीनपूजयन्नपि हरिप्रेरणया पूजयतीति तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणपूजनवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४२० ॥

अनोदं-हरिप्रेरणं तत्र दः-क्षीणः अर्थात् तत्कर्तुमक्षमः, तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणक्षीणवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४२७ ॥

अनोदो-हरिप्रेरणं तेन दो-दानशौण्डो यः सोऽप्यनोददः। यो हि स्वयम-
३० दाता सन् हरिप्रेरणया दानशौण्डो भवति तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणदानशौण्डवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४३४ ॥

---

१ 'रणेन यो ददा०' इति ख-पाठः। २ 'पूजारूपं' इति ग-ङ-पाठः।

अनोदो–हरिप्रेरणं तस्य दः–पालको यः सोऽप्यनोददः, तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणपालकवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४४१ ॥

अनोदो–हरिप्रेरणं तेन दो–दीप्तिर्यस्य सोऽप्यनोददः, तत्सं० हे अनोदद! इत्यादि ७ अर्थाः हरिप्रेरणदीप्तिवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ४४८ ॥

एवं "अः शिवे केशवे वायौ" (विश्व० श्लो० ५) इत्याद्युक्तत्वात् यथा विष्णुवाचिना ५ अशब्देन समं पूर्वं ३६४(५?) अर्थेभ्य आरभ्य ४४८ अर्थान् यावत् ये ८४ अर्थाः कृतास्तथा शिवावाचिना अशब्देनापि ८४ अर्थाः कार्याः। यथा अः–शिवस्तद्वन्नोदं–प्रेरणं–ददातीति अनोददः, तत्सं० हे अनो० हे अ!–हे प्राणिन्! ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादिविधिना ८४ अर्थाः पूर्ववत् कार्याः। अर्थयोजनाऽपि स्वयं कार्या। सर्वे० ॥ ५३२ ॥

एवं अर्हद्वाचिनाऽपि अशब्देन समं पूर्ववत् ८४ अर्थाः कार्याः। अः–अर्हन् १० तद्वन्नोदं–प्रेरणं धर्मोपदेशरूपं लोकानां ददातीति अनोददः–अम्बडादिः, तत्सं० हे अनोदद! हे अ!–हे प्राणिन्! ते–तुभ्यं राजा सौख्यं ददातु इत्यादि० सर्वे० ॥ ६१६ ॥

अः–विधिः तस्मै तस्य तत्र वा नोदं–प्रेरणं ददाति सोऽप्यनोददः, एवंविधः कोऽपि। अर्थयोजना स्वयं कार्या तत्सं० हे अनोदद! हे अ!–प्राणिन्! इत्यादि ७ अर्थाः विधिप्रेरणदायकवाचिना अनोददपदेन केवलेन कार्याः। सर्वे० ॥ ६२३ ॥ १५

## राजा अ! आ-नोद-द! ते सौख्यम् ॥ ६२४–७५६ ॥

आ–विधिस्तद्वन्नोदं–प्रेरणं ददातीति सोऽप्यानोददः तत्सं० हे आनोदद! हे अ!–प्राणिन्! ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादि ७ अर्थाः विधिप्रेरणदायकवाचिना[1] आनोददपदेन केवलेन कार्याः। सर्वे० ॥ ६३० ॥

आवत् नोदं–परकृतं प्रेरणं द्यति–खण्डयति सोऽप्यानोददः तत्सं० इत्यादि ७ २० अर्थाः विधिसमप्रेरणखण्डकवाचिना आनोददपदेन के० कार्याः। सर्वे० ॥ ६३७ ॥

आनोदं–विधिप्रेरणं दयते–पालयतीति सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः विधिप्रेरणपालकवाचिना आनोददपदेन के० कार्याः। सर्वे० ॥ ६४४ ॥

आनोदं–विधिप्रेरणं द्यति–खण्डयति सोऽप्यानोददः, विध्याज्ञाविराधक इत्यर्थः, तत्सं० हे आनोदद! हे अ!–प्राणिन्! इत्यादि ७ अर्थाः विधिप्रेरणविराधकवाचिना २५ आनोददपदेन के० कार्याः। सर्वे० ॥ ६५१ ॥

आनोदो–विधिप्रेरणं तेन तस्माद् वा दो–दानं यस्य सोऽप्यानोददः, यो हि स्वयमदाता सन् विधिप्रेरणया ददातीति तत्सं० हे आनोदद! हे अ!–प्राणिन्! इत्यादि ७ अर्थाः विधिप्रेरणदानवाचिना आनोददपदेन के० कार्याः। सर्वे० ॥ ६५८ ॥

आनोदो–विधिप्रेरणं तेन तस्माद् वा दः–पूजनं यस्य सोऽप्यानोददः, तत्सं० हे ३०

---

१ 'आचिना' इत्यधिकः ख–पाठश्चिन्तनीयः।

आनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः विधिप्रेरणपूजनवाचिना आनोददपदेन के० कार्याः । सर्वे० ॥ ६६५ ॥

आनोदो–विधिप्रेरणं तेन दो–दानशौण्डो यः सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः विधिप्रेरणदानशौण्डवाचिना आनोददपदेन के० कार्याः । सर्वे० ॥ ६७२ ॥

५ आनोदस्य–विधिप्रेरणस्य दः–पालकः सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः विधिप्रेरणपालकवाचिना आनोददपदेन केवलेन कार्याः । सर्वे० ॥ ६७९ ॥

आनोदो–विधिप्रेरणं तेन दो–दीप्तिर्यस्य सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः विधिप्रेरणदीप्तिवाचिना आनोददपदेन के० कार्याः । सर्वे० ॥ ६८६ ॥

एवं आचार्यवाचिना आशब्देनापि समं ब्रह्मवाचिआशब्दवत् ७० अर्थाः कार्याः । १० आ–आचार्यस्तद्वन्नोदं–प्रेरणं धर्मोपदेशरूपं ददातीति आनोददः, तत्सं० हे आनोदद ! हे अ !–प्राणिन् ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादि । सर्वे० ॥ ७५६ ॥

अथ पुनः प्रकारान्तरेण अर्थानाह—

## राजा अ ! अनोदद ! ते सौख्यम् ॥ ७५७–२१४७५ ॥

नोदनं नोदः–प्रेरणं, न नोदः अनोदः, तेन अनोदेन ददातीति अनोददः । यो १५ हि प्रेरणमन्तरेण स्वयमेव दानादि ददातीति तत्सं० हे अनोदद ! हे अ !–प्राणिन् ! ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु इत्यादि ७ अर्थाः पूर्ववदत्रापि अप्रेरणदायकवाचिना अनोददशब्देन केवलेन कार्याः । सर्वे० ॥ ७६३ ॥

एवं अनोदेन–प्रेरणमन्तरेण दयते–परान् पालयतीति सोऽप्यनोददः, तत्सं० हे अनोदद ! हे अ !–प्राणिन् ! इत्यादि ७ अर्थाः अप्रेरणपालकवाचिना अनोददपदेन २० केवलेन कार्याः । सर्वे० ॥ ७७० ॥

अनोदेन–प्रेरणाभावेन द्यति–शत्रून् खण्डयतीति अनोददः तत्सं० इत्यादि ७ अर्थाः अप्रेरणखण्डकवाचिना अनोदपदेन के० कार्याः सर्वे० ॥ ७७७ ॥

अनोदेन–प्रेरणाभावेन दो–दानं यस्य सोऽप्यनोददः तत्सं० इत्यादि ७ अर्थाः अप्रेरणदानवाचिना अनोददपदेन के० कार्याः । सर्वे० ॥ ७८४ ॥

२५ अनोदेन–प्रेरणमन्तरेण दः–पूजनं यस्य सोऽप्यनोददः तत्सं० इत्यादि ७ अर्थाः अप्रेरणपूजनवाचिना अनोददपदेन केवलेन कार्याः । सर्वे० ॥ ७९१ ॥

न विद्यते नोदः–प्रेरणं यस्य यस्मिन् वा सोऽप्यनोदः, स चासौ दः–क्षीणश्च अनोददः तत्सं० इत्यादि ७ अर्थाः अप्रेरणक्षीणवाचिना अनोददपदेन केवलेन कार्याः सर्वे० ॥ ७९८ ॥

३० अनोदेन–प्रेरणमन्तरेण दो–दानशौण्डो यः सोऽप्यनोददः इत्यादि ७ अर्थाः अप्रेरण० कार्याः । सर्वे० ॥ ८०५ ॥

अनोदः-प्रेरणाभावस्तेन दः-पालकः अनोददः, तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः प्रेरणाभावपालकवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ८१२ ॥

अनोदः-प्रेरणारहितः स चासौ दः-पालकः अनोददः तत्सं० इत्यादि ७ अर्थाः प्रेरणारहितपालकवाचिना अनोददपदेन के० कार्याः ॥ ८१९ ॥

अनोदे-अप्रेरणे दो-दीप्तिर्यस्य सोऽप्यनोददः तत्सं० इत्यादि ७ अर्थाः अप्रेरण- ५ दीप्तिवाचिना अनोददपदेन के० कार्याः। सर्वे० ॥ ८२६ ॥

पुनः प्रकारान्तरेण अर्थानाह—

( राजा अ! आ-नोद्-द्! ते सौख्यम्। )

आ-सामस्त्येन नोदे नोदेन नोदनात्[1] वा दो-दानं यस्य सोऽप्यानोददः तत्सं० हे आनोदद! हे अ!-प्राणिन्! ते-तुभ्यं राजा-नृपतिः सौख्यं ददातु इत्यादि ७ अर्थाः १० कार्याः। अर्थयोजनाऽपि सर्वत्र स्वयमेव कार्या। सर्वे० ॥ ८३३ ॥

आ-सामस्त्येन नोदात् नोदे वा दः-पूजनं यस्य सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः कार्याः। सर्वे० ॥ ८४० ॥

आ-सामस्त्येन नोदे-प्रेरणे दः-क्षीणः आनोददः तत्सं० इत्यादि ७ अर्थाः कार्याः। सर्वे० ॥ ८४७ ॥ १५

आ-सामस्त्येन नोदे-प्रेरणे दो-दानशौण्डो यः सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः कार्याः। सर्वे० ॥ ८५४ ॥

आ-सामस्त्येन नोदे-प्रेरणे दो-देव इव यः सोऽप्यानोददः तत्सं० इत्यादि ७ अर्थाः कार्याः। सर्वे० ॥ ८६१ ॥

आ-सामस्त्येन नोदे नोदेन वा दो-दीप्तिर्यस्य सोऽप्यानोददः तत्सं० इत्यादि ७ २० अर्थाः कार्याः। सर्वे० ॥ ८६८ ॥

पुनः प्रकारान्तरेण अर्थानाह—

( अनोदं ) अप्रेरणं-प्रेरणारहितं दं-कलत्रं यस्य सोऽप्यनोददः तत्सं० हे अनोदद! हे अ!-प्राणिन्! इत्यादि ७ अर्थाः कार्याः। सर्वे० ॥ ८७५ ॥

एते अर्थाः नोदद-अनोदद-आनोददपदैर्नानार्थवाचकैर्जाताः ॥ २५

अथ ददाददपदाभ्यामर्थानाह—

( राजानः अ! दद! ते सौख्यम्। )

दं-दानं ददातीति ददो-दाता तत्सं० हे दद! हे अ!-प्राणिन्! राजानो-नृपाः ते-तव सौख्यं ददतामिति शेषः इत्याशीर्वचनम्। एवमग्रेऽपि सर्वत्र यथाऽवसरं ददपदस्य व्युत्पत्तिः कार्या। अर्थयोजना स्वयं कार्या ॥ १ ॥ हे दद! हे अ!-प्राणिन्! ३०

[1] 'नोदेन नोदात्' इति क-पाठः ग-घ-पाठस्तु 'नोदनात् नोदेन वा'।

ते–तुभ्यं राजानो–नृपाः सौख्यं ददतामिति बन्धुवचनम् ॥ २ ॥ हे दद ! हे अ !–प्राणिन् ! ते–त्वया राजानो नृपाः सौख्यं नीयन्तां इति क्रियापदमर्थाक्षेपात् सर्वत्र ग्राह्यम् । समर्थनयुक्तिः पूर्वोक्ता स्मरणीया ॥ ३ ॥ हे दद ! हे अ !–प्राणिन् ! ते–तव राजानो–भवदीयनृपाः सौख्यं ददतामिति शेषः ॥ ४ ॥ हे दद ! हे अ !–प्राणिन् ! ते राजानो–नृपाः ५ सौख्यं प्राप्नुवन्तु इत्यप्याशीर्वचनम् ॥ ५ ॥

## ( राजा नः अ ! दद ! ते सौख्यम् । )

हे दद ! हे अ !–प्राणिन् ! नः–अस्माभिर्हेतुभूतैः राजा ते–तव सौख्यं ददातु ॥ ६ ॥ हे दद ! हे अ !–प्राणिन् ! ते–तव राजा–त्वदीयो नृपः सौख्यं प्राप्नोतु इत्यप्याशीर्वचनम् । कैः कृत्वा ? नः–अस्माभिः सेवकभूतैरिति गम्यम् ॥ ७ ॥ हे दद ! ते–तव १० राजा नः–अस्मभ्यं सौख्यं ददातु ॥ ८ ॥ हे दद ! हे अ !–प्राणिन् ! ते–त्वया नः–वयं सौख्यं नीयामहे । किं० (त्वया) ? 'राजा' नृपेण । व्युत्पत्तिः पूर्ववत् कार्या ॥९॥ हे दद ! हे अ !–प्राणिन् ! ते–तव राजा नः–अस्मत् सौख्यं प्राप्नोतु ॥१०॥ हे दद ! हे अ !–प्राणिन् ! ते–तव राजा नः–अस्माकं सौख्यं करोत्विति शेषः ॥ ११ ॥ हे दद ! हे अ !–प्राणिन् ! ते–त्वया नः–अस्माकं सौख्यं दातव्यमिति शेषः । किं० त्वया ? 'राजा' नृपेण ॥ १२ ॥ १५ हे दद ! हे अ !–प्राणिन् ! ते–त्वया नः–अस्माकं सौख्यं कर्तव्यम् । किं० त्वया ? 'राजा' नृपेण ॥ १३ ॥ हे दद ! हे अ !–प्राणिन् ! ते–त्वया नः–अस्मत् सौख्यं प्राप्यताम् । किं० त्वया ? 'राजा' नृपेण ॥ १४ ॥

हे दद ! हे अ !–प्राणिन् ! ते–तुभ्यं राजा सौख्यं ददातु किं० राजा ? 'नः' बुद्धः । व्युत्पत्त्यादि सर्वं पूर्ववत् । "नः पुनर्बन्धबुद्धयोः" इत्येकाक्षरनाममाला ॥ १ ॥ हे दद ! २० ते–तव राजा सौख्यं ददातु । किं० राजा ? 'नः' अवगततत्त्वः ॥ २ ॥[1] हे दद ! हे अ !–प्राणिन् ! ते–तव राजा–त्वदीयनृपः सौख्यं ददातु । किं० राजा ? 'नो' बुद्धः ॥ ४ ॥ एवं नञ्समासपूर्वेणापि अनशब्देनार्थचतुष्टयं पूर्ववत् कार्यम् । यथा–हे दद ! ते–तुभ्यं राजा सौख्यं ददातु । किं० राजा 'अनः' अबुद्धः–अनवगततत्त्वः, मूर्ख इति यावत् । अर्थयोजनादिकमपि सर्वं स्वयं कार्यम् ॥४॥ सर्वे पूर्वोक्तमीलने ॥२२॥ हे दद ! हे अ !–प्राणिन् ! २५ ते–तुभ्यं राजा सौख्यं ददातु । किं० राजा ? 'अनः' बन्धनरहितः । एवं पूर्ववदत्रापि ४ अर्थाः कार्याः ॥४॥ जाताः ॥ २६ ॥ हे दद ! हे अ !–प्राणिन् ! ते–तुभ्यं राजा–नृपतिः सौख्यं ददातु । किं० राजा ? 'अनः' । "नकारः कीर्तितो ज्ञाने" इत्यादि ( श्रीवररुचिकृते एकाक्षरनिघण्टके श्लो० २२) वचनात् ज्ञानरहितो जड इति यावत् । इत्यादि ४ अर्थाः पूर्ववदत्रापि कार्याः । पूर्वोक्तमीलने[3] ॥ ३० ॥ एवं नञ्समासपूर्वेणापि दानदायक- ३० वाचिना ददपदेन समं ३० कार्याः । अर्थयोजनाऽपि स्वयं कार्या । व्युत्पत्त्यादि पूर्ववत् ।

---

१ तृतीयार्थानिर्देशात् प्रतिभाति यदुतात्र पाठप्रपातः, परन्तु एतदाश्चर्यकारि यत् प्रतिचतुष्टयेऽप्येवम् ।

२ इत्यादिशब्देन 'नः श्रुतेऽपि परिकीर्तितः' इति ज्ञायते ।

३ 'पूर्वोक्तितो ज्ञाने मीलने' इति ख–पाठः, 'पूर्वोक्तनो ज्ञाने मीलने' इति ग–पाठः ।

यथा हे दद! हे अ!-प्राणिन्! राजानो-नृपाः ते-तव सौख्यं ददतामित्यादि ३० अर्थाः पूर्वोक्तरीत्या कार्याः। पूर्व३०मीलने जाताः॥ ६०॥

पुनः प्रकारान्तरेण अर्थानाह—

दं-पूजनं ददातीति ददः-धातूनामनेकार्थत्वात् पूजाकारकः अर्थाज्जिनप्रतिमादि-पूजाकृत् कोऽपि भव्यजीवः तत्सं० हे दद! अ!-प्राणिन्! राजानो-नृपाः ते-तव सौख्यं ५ ददतामित्यादि ६० अर्थाः पूर्ववदत्रापि पूजनदायकवाचिना ददपदेन केवलेन नञ्समासपूर्वेण च कार्याः। अर्थयोजनाऽपि स्वयं कार्या। सर्वे०॥ १२०॥

दो-दानशौण्डस्तद्वद् ददातीति ददः तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः दानशौण्डदायकवाचिनाऽपि ददपदेन केवलेन नञ्पूर्वकेण (च) कार्याः। सर्वे०॥ देभ्यो-देवेभ्यो ददाति अर्थात् बल्यादि यच्छतीति ददः, तत्सं० हे दद! हे अ!-प्राणिन्! १० इत्यादि ६० अर्थाः देवदायकवाचिना ददपदेन के० नञ्० कार्याः। सर्वे०॥ २४०॥

देन-दीप्त्या दानादि ददातीति ददः, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः दीप्तिदायकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे०॥ ३००॥

दान्-क्षीणान् दयापरत्वात् दयते-पालयतीति यः सोऽपि ददः, तत्सं० हे दद! हे अ!-प्राणिन्! (इत्यादि) ६० (अर्थाः) क्षीणपालकवाचिना ददपदेन (केव०) नञ्पूर्वेण च १५ कार्याः। सर्वे०॥ ३६०॥

दान्-दानशौण्डान् ददते-पालयति यः सोऽपि ददः-कोऽपि सुराजा तत्सं० इत्यादि ६० अर्थाः दानशौण्डपालकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे०॥ ४२०॥

दं-कलत्रं दयते-पालयति यः सोऽपि ददः, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० (अर्थाः) कलत्रपालकवाचिना ददपदेन केवलेन० कार्याः। सर्वे०॥४८०॥ २०

दं-दानं द्यति-खण्डयति इति ददः अर्थाद् दाननिषेधकः कोऽपि पापमतिः, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः दाननिषेधकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे०॥ ५४०॥

दं-पूजनं द्यति-खण्डयति सोऽपि ददः अर्थाद् भगवत्पूजानिषेधकः पापिष्ठः कश्चित्, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः पूजननिषेधकवाचिना ददपदेन के० २५ नञ्पू० कार्याः। सर्वे०॥ ६००॥

दान्-क्षीणान् द्यति-खण्डयति सोऽपि ददः, कोऽपि महानिर्दयोऽतीव पापिष्ठः, तत्सं० हे दद! हे अ!-प्राणिन्! ६० अर्थाः क्षीणखण्डकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे०॥ ६६०॥

दान्-दानशौण्डान् द्यति-खण्डयति यः सोऽपि ददः अर्थाद् यः कोऽपि सु(कु)राजा ३०

१ 'पूजानिषेधकः' इति ग-म-पाठः।

दानशौण्डान् जनान् विलोक्य दण्डयति इति स हि दद उच्यते तत्सं० हे दद! इत्यादि ६० (अर्थाः) दानशौण्डखण्डकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥७२०॥

दं-दीप्तिं अर्थात् परेषां द्यति-खण्डयति इति सोऽपि ददः, तत्सं० हे दद! इत्यादि ६० अर्थाः दीप्तिखण्डकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ७८० ॥

५ दो-देवस्तद्वदरीन् द्यति-खण्डयतीति ददः, तत्सं० हे दद! इत्यादि ६० अर्थाः देव(वत्)खण्डकवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ८४० ॥

दं-कलत्रं द्यति-खण्डयति सोऽपि ददः-स्त्रीघातकारकोऽधमः, तत्सं० हे दद! इत्यादि ६० अर्थाः स्त्रीमारकददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ९०० ॥

दस्य-दानस्य दो-दानं यस्य सोऽपि ददः, तत्सं० हे दद! इत्यादि ६० अर्थाः दान-
१० दानवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ९६० ॥

दो-दानं तेन दः-पूजनं यस्य सोऽपि ददः, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः दानपूजनवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे ॥ १०२० ॥

दे-दाने दः-क्षीणः ददः, दानं दातुमसमर्थ इत्यर्थः, तत्सं० इत्यादि ६० अर्थाः दानक्षीणवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १०८० ॥

१५ दे-दाने दो-दानशौण्डो यः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानदान-शौण्डवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ११४० ॥

दस्य-दानस्य दः-पालकः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानपालकवा-चिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १२०० ॥

दे-दाने द इव-देव इव यः सोऽपि ददः, यो हि दानावसरे देव इवोदारचित्तो
२० भवति तत्सं० इत्यादि ६० अर्थाः दानदेववाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १२६० ॥

दो-दानं तेन तत्र वा दो-दीप्तिर्यस्य सोऽपि ददः, तत्सं० हे दद! हे अ!-प्राणिन्! इत्यादि ६० अर्थाः दानदीप्तिवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १३२० ॥

दः-पूजनं पूजा तस्य दो-दानं यस्य यस्माद् यस्मिन् वा सोऽपि ददः, तत्सं०
२५ इत्यादि ६० अर्थाः पूजनदानवाचिना ददपदेन केवलेन नञ्पू० कार्याः। सर्वे० ॥१३८०॥

दे-पूजने दः-क्षीणो यः सोऽपि ददस्तत्सं० इत्यादि ६० अर्थाः पूजनक्षीणवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ १४४० ॥

देन-कलत्रेण सह दः-क्षीणः ददः। यस्य हि स्त्रिया समं अतितीव्रं कामं भुञ्जा-नस्य देहः क्षीणस्तत्सं० हे दद! इत्यादि ६० अर्थाः कलत्रक्षीणवाचिना ददपदेन के०
३० नञ्पू० कार्याः। सर्वे० ॥ १५०० ॥

देन–पूजनेन उपलक्षितो दो–दानशौण्डः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पूजनदानशौण्डवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १५६० ॥

दस्य–पूजनस्य दः–पालकः ददः, तत्सं० इत्यादि ६० (अर्थाः) पूजनपालकवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १६२० ॥

दः–पूजनं तेनोपलक्षितो दो–देवो यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पूजन० कार्याः । सर्वे० ॥ १६८० ॥ ५

देन–पूजनेन दो–दीप्तिर्यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पूजनदीप्तिवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १७४० ॥

देभ्यः–क्षीणेभ्यो दो–दानं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः क्षीणदानवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १८०० ॥ १०

दं–कलत्रं तस्मै तस्य तस्मिन् वा दो–दानं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः कलत्रदानवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १८६० ॥

दं–क्षीणं दं–कलत्रं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः क्षीणकलत्रवाचिना ददपदेन के० नञ्पूर्व० कार्याः । सर्वे० ॥ १९२० ॥

दानां–क्षीणानां दः–पूजनं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः क्षीणपूजनवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ १९८० ॥ १५

दानां–क्षीणानां दः–पालकः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः क्षीणपालकवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ २०४० ॥

दः–क्षीणः दो–दीप्तिर्यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः क्षीणदीप्तिवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ २१०० ॥ २०

दवत्–दानशौण्डवत् दो–दानं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानशौण्डदानवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ २१६० ॥

दस्य–दानशौण्डस्य दः–पूजनं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानशौण्डपूजनवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ २२२० ॥

दो–दानशौण्डः स चासौ दः–क्षीणः ददः, तत्सं० इत्यादि ६० अर्थाः कार्याः । सर्वे० ॥ २२८० ॥ २५

दो–दानशौण्डस्तस्य दः–पालकः यः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानशौण्डपालकवाचिना ददपदेन के० कार्याः । सर्वे० ॥ २३४० ॥

दवत्–दानशौण्डवत् दो–दीप्तिर्यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दानशौण्डदीप्तिवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ २४०० ॥ ३०

१ पूजावाचिना इति ब-पाठः ।

दः–पालकः तस्मै[1] दो–दानं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पालक-दानवाचिना ददपदेन के० कार्याः। सर्वे० ॥ २४६० ॥

दस्य–पालकस्य दः–पूजनं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पालक-पूजनवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २५२० ॥

५ दः–पालकः स चासौ दः–क्षीणश्च ददः, तत्सं० इत्यादि ६० अर्थाः पालकक्षीण-वाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २५८० ॥

दः–पालकः स चासौ दो–दानशौण्डश्च ददः, तत्सं० इत्यादि ६० अर्थाः पालक-दानशौण्डवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २६४० ॥

दः–पालकः[2] दो–देवो यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पालकदान-१० वाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २७०० ॥

दं–पालकं दं–कलत्रं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः कार्याः। सर्वे० ॥ २७६० ॥

दः–कोऽपि पालकः तद्वद् दः–दीप्तिर्यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः पालकदीप्तिवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २८२० ॥

१५ दाय–देवाय दो–दानं यस्य सोऽपि ददः, कोऽपि देवभक्त इत्यर्थः, तत्सं० इत्यादि ६० अर्थाः देवदानवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २८८० ॥

दानां–देवानां दः–पूजनं यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः देवपूजन-वाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ २९४० ॥

दवत्–देववत् अर्थात् वैश्रमणदेववत् दो–दानशौण्डो यः सोऽपि ददः। अत्र २० वैश्रमणदेवोपमा च दानशूरत्वात्। स हि दानशूरो भवति। यदुक्तं श्रीस्थानाङ्गसूत्रे चतुःस्थानके–"[3]चत्तारि सूरा पन्नत्ता। तं जहा–खंतिसूरा १ तवसूरा २ दाणसूरा ३ जुद्धसूरा ४; खंतिसूरा अरिहंता, तवसूरा अणगारा, दाणसूरा वेसमणा, जुद्धसूरा वासुदेवा" इत्यादि। तत्सं० इत्यादि ६० अर्थाः देवदानशौण्डवाचिना ददपदेन के० नञ्पू० कार्याः। सर्वे० ॥ ३००० ॥

२५ दानां–देवानां दः–पालकोऽर्थादिन्द्रः, अथवा दो–देवो दः–पालको यस्य सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः देवपालकवाचिना ददपदेन के० नञ्पू० कार्याः सर्वे० ॥३०६०॥

---

१ 'तस्मिन्' इति ग-घ-पाठः। २ 'पालकः तस्मै दो' इति क-पाठः।

३ छाया—

चत्वारः शूराः प्रज्ञप्ताः, तद्यथा–क्षान्तिशूराः तपःशूराः दानशूराः युद्धशूराः। क्षान्तिशूरा अर्हन्तः, तपः-शूरा अनगाराः, दानशूरा वैश्रमणाः, युद्धशूरा वासुदेवाः।

दो-देवस्तद्वत् दो-दीप्तिर्यस्य सोऽपि ददः, तत्सं० हे दद !-हे अ !-प्राणिन् इत्यादि ६० अर्थाः देवदीप्तिवाचिना ददपदेन के० कार्याः । सर्वे० ॥ ३१२० ॥

देन-दीप्त्या दो-दानं सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दीप्तिदानवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ ३१८० ॥

देन-दीप्त्या दः-पूजनं यस्य सोऽपि ददः । यो हि देवादिपूजां कुर्वन् दीप्तिमान् ५ भवति सोऽपि ददः इत्यादि ६० अर्थाः दीप्तिपूजनवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ ३२४० ॥

देन-दीप्त्या दः-क्षीणः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः दीप्तिपूजनवाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ ३३०० ॥

देन-दीप्त्या उपलक्षितो दो-दानशौण्डो यः सोऽपि ददः, तत्सं० इत्यादि ६० अर्थाः १० दीप्तिदानशौण्डवाचिना ददपदेन के० नञ्पूर्वेण च कार्याः । सर्वे० ॥ ३३६० ॥

देन-दीप्त्या दो-देवो यः सोऽपि ददः । यो हि दीप्त्या कृत्वा देव इव दृश्यते तत्सं० इत्यादि ६० अर्थाः दीप्तिदेववाचिना ददपदेन के० नञ्पू० कार्याः । सर्वे० ॥ ३४२० ॥

अत्र पूर्वोक्तेषु सर्वेषु अर्थेषु तृतीया-चतुर्थी-प्रथमा-पञ्चमीविभक्तिबहुवचनेषु अस्मच्छ- १५ ब्दस्य नसादेशो विज्ञेयः । यदुक्तं श्रीकालापकमहाव्याकरणे[1]—"युष्मदस्मदोः पदं पदात् षष्ठीचतुर्थीद्वितीयासु वस्नसौ युष्मदस्मदोः पदं पदात् परं षष्ठीचतुर्थीद्वितीयासु बहुत्वे निष्पन्नं यथासङ्ख्यं वस्नसावित्येतावादेशौ वा प्राप्नोति । पुत्रो युष्माकं पुत्रोऽस्माकं, पुत्रो वः पुत्रो नः । पुत्रो युष्मभ्यं पुत्रोऽस्मभ्यं, पुत्रो वः पुत्रो नः । पुत्रो युष्मान् पुत्रोऽस्मान्, पुत्रो वः पुत्रो नः । युष्मदस्मदोरिति किम् ? पुत्रस्तेषां स्वामी । पदादिति किम् ? युष्माकं २० अस्माकम् । तथाऽत्र सूत्रे षष्ठी-चतुर्थी-द्वितीयास्विति व्यतिक्रमनिर्देशात् क्वचित् पञ्चमी-तृतीया-प्रथमास्वपि वस्नसादयो भवन्ति । तथा च विष्णुवार्त्तिके—

"प्रथमायां तृतीयायां, पञ्चम्यां चापि साधितम् ।
प्राप्नोति युष्मदादीनां, वस्नसादीन् पदं क्वचित् ॥ १ ॥"

यथा—"एकं दृष्ट्वा धनुःपाणिं, मानुषं समुपस्थितम् । २५
राजसं[2] बलमुत्सृज्य, किं वो भीता इव स्थिताः ? ॥ १ ॥"

इदं रावणवाक्यम् । अत्र वो यूयमित्यर्थः ।

"श्रुतं वश्चित्रगुप्तस्य, भाषितं मनसः प्रियम् ।"

---

[1] 'करणेषु' इति ग-ख-पाठः । [2] 'राक्षसं' इति ग-ख-पाठः ।

अत्र वो युष्माभिरित्यर्थः। एवमग्रेऽपि–

"गेये केन विनीतौ वां, कस्य चेयं कवेः कृतिः।
इति राज्ञा स्वयं पृष्टौ, तौ वाल्मीकमशंसतुः॥"

अत्र वां युवामित्यर्थः। अत्रोक्ते कर्मणि प्रथमा।

५　　"देशे विचरतस्तस्य, लक्षणानि निबोध मे।" इति।

अत्र मे इति मत्सकाशादित्यर्थः। इति पञ्चमी"। अत्र यद्यपि उदाहरणे युष्मच्छब्दस्य वसादेश एव तथापि तद्वत् अस्मच्छब्दस्यापि नसादेशो विज्ञेयः। तथा अनेनैव सूत्रबलेनास्मच्छब्दस्यापि तृतीयैकवचने ते इत्यादेशः समर्थनीयः। एवं सर्वत्र यथासम्भवं समर्थना विधेया। सर्वे० ॥ [२]४२० ॥

१०　एवं यक्षवाचकस्य सूर्यवाचकस्य च राजन्शब्दस्यार्थाः कार्याः। तत एते ४२९५ अर्थाः पञ्चवारं गुणिताः जाताः २१४७५ ॥

अथ पुनरपि प्रकारान्तरेण अर्थानाह—

## राज–आनः अ! दद! ते सौख्यम् ॥१–६॥

हे दद!–हे दानदायक! हे अ!–प्राणिन्! राज्ञः आनो–मुखश्वासो राजानः–राज-
१५ मुखश्वासः ते–तुभ्यं सौख्यं–सुखं ददातु। अर्थयोजना स्वयं कार्या ॥ १ ॥ हे अ!–हे प्राणिन्! हे दद!–हे दानदायक! राजानो–राजमुखश्वासः ते–तव सौख्यं दत्ते ॥ २ ॥ हे अ!–हे प्राणिन्! हे दद!–हे दानदायक! ते–तव राजानो–भवन्नृपमुखश्वासः सौख्यं दत्ताम्, ममेति शेषः। राज्ञा समं मम संयोगो भवत्विति शेषः। इदं नृपपार्श्ववर्तिसेवकजनं प्रति कामातुरायाः कामिन्या वचनम् ॥ ३ ॥ राज्ञः आनः–प्राणः बलमिति यावत्
२० राजानो–राजप्राणः हे अ!–हे प्राणिन्! हे दद!–हे दानदायक! ते–तुभ्यं सौख्यं ददातु। यावद् राजा जीवति तावत् त्वं सुखी भवेत्यर्थः। इदं दानदायकं राजोपजीविनं[३] सेवकविशेषं प्रति निजबन्धुजनवचनम् इत्यादि ३ अर्थाः राजमुखश्वासवाचिराजन्शब्दवदत्रापि राजप्राणवाचिराजानःशब्दस्य ददपदेन समं कार्याः। सर्वे० ॥ ६ ॥

## राज–आ नः! दद! ते सौख्यम् ॥ १–४६ ॥

२५　राजभिः–नृपैः कृत्वा आ–शोभा येषां ते राजाः–राजसेव्याः[१] केचन महापुरुषाः हे नः!–हे नर! हे दद!–हे दानदायक! ते–तुभ्यं ते–तव वा सौख्यं ददतामित्याशीर्वचनम् ॥ १–२ ॥ ते राजाः नः–अस्माकं १ अस्मभ्यं २ वा सौख्यं ददतामित्याशीर्वचः। जाताः ४ ॥ एवं नञ्पूर्वेण ददपदेनापि ४ अर्थाः कार्याः। जाताः ८ ॥ पूर्वं ६ षट् मीलने जाताः १४ ॥ "ऋशब्दः पावके सूर्ये, धर्मे दाने धने पुमान्" इति ( विश्वशम्भु०

१ 'राजाऽऽभव्याः' इति ग-घ–पाठः।　२ '३५४२' इति ग-पाठः।　३ '०पसेविनं' इति ग-घ-पाठः।

श्लो० ११) उक्तत्वात् अरं-धर्मं १ दानं २ धनं ३ सूर्यं ४ आ-सामस्त्येन अजन्ति-गच्छन्ति 'गत्यर्थानां ज्ञानार्थत्वात्' प्राप्नुवन्तीति रत्वे कृते राजाः-धर्मिष्ठाः १ गुणिनः २ पुण्याढ्याः ३ सूर्यसेवकाश्च ४ हे नः!-हे नर! हे दद!-हे दानदायक! ते-तुभ्यं १ तव २ वा सौख्यं ददताम्। ततः ॥ ८ ॥ एवं ते राजाः धर्मिष्ठादयः चत्वारः नः-अस्मभ्यं १ अस्माकं २ वा सौख्यं ददताम्। एतेऽपि ८ पूर्वं ८ मीलने १६ ॥ एवं नञ्पूर्वेणापि ५ ददपदेन समं १६ अर्थाः कार्याः। जाताः ३२ ॥ पूर्वं १४ मीलने जाताः ४६ ॥

## राजा औ नः! दद! ते सौख्यम् ॥

आ-धर्मः। किंविशिष्टः? राजा-रञ्जको दीप्यमानो वा। व्युत्पत्त्यादि पूर्ववत्। हे नः!-हे नर! हे दद! ते-तुभ्यं १ तव २ वा सौख्यं ददातु २। एवं नञ्पूर्वेणापि दद-पदेन २ अर्थौ कार्यौ। जाताः ४। एवं अः-अर्हन्। किं०? 'राजा' स्वामी इत्यादि १० प्रकारेणापि ४ अर्थाः कार्याः। जाताः ८ ॥ एवं राजाः-सिद्धाः व्युत्पत्त्यादि पूर्ववत् इत्यादि प्रकारेणापि ४ अर्थाः कार्याः। जाताः १२ ॥ एवं आ-आचार्यः। किं०? 'राजा' रञ्जकः इत्यादि प्रकारेणापि ४ अर्थाः कार्याः। जाताः १६ ॥ पूर्वं४६मीलने जाताः ६२ अर्थाः॥ आ (अः?)-सूर्यः। किं०? 'राजा' स्वामी दीप्यमानो वा। हे नः!-हे नर! हे दद!- दानदायक! ते-तुभ्यं १ तव २ वा सौख्यं ददातु २। एवं अददपदेनापि समं २, १५ एवं ४। सर्वे० ॥ ६६ ॥ एवं अः-कृष्णः। किं०? 'राजा' इत्यादिप्रकारेण पूर्ववत् ४ अर्थाः कार्याः। एवं अः-ईश्वरः। किं०? 'राजा' इत्यादिप्रकारेण ४। जाताः ७० ॥ एते ७० अर्थाः दानदायकददपदेन केवलेन नञ्समासपूर्वेण च जाताः।

एवं दं-पूजनं पूजां ददातीति ददः ॥ १ ॥ दो-दानशौण्डस्तद्वत् ददातीति ददः ॥ २ ॥ देभ्यो-देवेभ्यो ददातीति ददः ॥ ३ ॥ देन-दीप्त्या ददातीति ददः ॥ ४ ॥ दान् २० -क्षीणान् दयते-दयापरत्वात् पालयतीति ददः ॥ ५ ॥ दान्-दानशौण्डान् दयते-पालयतीति ददः ॥ ६ ॥ दं-कलत्रं दयते-पालयतीति ददः ॥ ७ ॥ दं-दानं द्यति-खण्डयतीति ददः ॥ ८ ॥ दं-पूजनं द्यति-खण्डयतीति ददः ॥ ९ ॥ दान्-क्षीणान्-द्यति खण्डयतीति ददः ॥ १० ॥ दान्-दानशौण्डान् द्यति-खण्डयतीति ददः ॥ ११ ॥ दं-दीप्तिं द्यति-खण्डयतीति ददः ॥ १२ ॥ दो-देवस्तद्वत् द्यति-अरीन् खण्डयतीति ददः २५ ॥ १३ ॥ दं-कलत्रं द्यति-खण्डयतीति ददः ॥ १४ ॥ दस्य-दानस्य दो-दानं यस्य सोऽपि ददः ॥ १५ ॥ दो-दानं तेन दः-पूजनं यस्य सोऽपि ददः ॥ १६ ॥ दे-दाने दः-क्षीणो यः सोऽपि ददः ॥ १७ ॥ दे-दाने दो-दानशौण्डो यः सोऽपि (ददः) ॥ १८ ॥ दस्य-दानस्य दः-पालकः सोऽपि ददः ॥ १९ ॥ दे-दाने द इव-देव इव यः सोऽपि ददः ॥ २० ॥ दो-दानं तेन तत्र वा दो-दीप्तिर्यस्य सोऽपि ददः ॥ २१ ॥ ३० दः-पूजनं तस्य दो-दानं यस्य सोऽपि ददः ॥ २२ ॥ दे-पूजने दः-क्षीणो यः सोऽपि

१ 'अः' इत्यपि सम्भवति। २ 'अ' इति क-पाठः। ३-५ 'ददतीति' इति क-ख-पाठः।

ददः ॥ २३ ॥ देन–कलत्रेण सह दः–क्षीणः सोऽपि ददः ॥ २४ ॥ देन–पूजनेन उपल-
क्षितो दो–दानशौण्डो यः सोऽपि ददः ॥ २५ ॥ दस्य–पूजनस्य दः–पालकः सोऽपि ददः
॥ २६ ॥ देन–पूजनेन उपलक्षितो दो–देवो यस्य सोऽपि ददः ॥ २७ ॥ देन–पूजनेन
दो–दीप्तिर्यस्य सोऽपि ददः ॥ २८ ॥ देभ्यः–क्षीणेभ्यो दो–दानं यस्य सोऽपि ददः
५ ॥ २९ ॥ दं–कलत्रं तस्मै दो–दानं यस्य सोऽपि ददः ॥ ३० ॥ दं–क्षीणं दं–कलत्रं यस्य
सोऽपि ददः ॥ ३१ ॥ दानां–क्षीणानां दः–पूजनं यस्य सोऽपि ददः ॥ ३२ ॥ दानां–
क्षीणानां दः–पालको यः सोऽपि ददः ॥ ३३ ॥ दः–क्षीणः दो–दीप्तिर्यस्य सोऽपि ददः
॥ ३४ ॥ दवत्–दानशौण्डवत् दो–दानं यस्य सोऽपि ददः ॥ ३५ ॥ दस्य–दानशौण्डस्य
दः–पूजनं यस्य सोऽपि ददः ॥ ३६ ॥ दो–दानशौण्डः स चासौ दः–क्षीणः सोऽपि ददः
१० ॥ ३७ ॥ दो–दानशौण्डस्तस्य दः–पालकः सोऽपि ददः ॥ ३८ ॥ दवत्–दानशौण्डवत्
दो–दीप्तिर्यस्य सोऽपि ददः ॥ ३९ ॥ दः–पालकः तस्मै दो–दानं यस्य सोऽपि ददः
॥ ४० ॥ दस्य–पालकस्य दः–पूजनं यस्य सोऽपि ददः ॥ ४१ ॥ दः–पालकः स चासौ
दः–क्षीणश्च सोऽपि ददः ॥ ४२ ॥ देः–पालकः स चासौ दः–क्षीणश्च सोऽपि ददः
॥ ४३ ॥ दः–पालकः स चासौ दो–दानशौण्डश्च सोऽपि ददः ॥ ४४ ॥ दः–पालको दो–
१५ देवो यस्य सोऽपि ददः ॥ ४५ ॥ दं–पालकं दं–कलत्रं यस्य सोऽपि ददः ॥ ४६ ॥ दः–
पालकस्तद्वद् दो–दीप्तिर्यस्य सोऽपि ददः ॥ ४७ ॥ दाय–देवाय दो–दानं यस्य सोऽपि ददः
॥ ४८ ॥ दानां–देवानां दः–पूजनं यस्य सोऽपि ददः ॥ ४९ ॥ दवत्–देववत् अर्थात्
वैश्रमणदेववद् दो–दानशौण्डो यस्य सोऽपि ददः ॥ ५० ॥ दानां–देवानां दः–पालको
यः सोऽपि ददः ॥ ५१ ॥ दो–देवस्तद्वत् दो–दीप्तिर्यस्य सोऽपि ददः ॥ ५२ ॥ देन–
२० दीप्त्या दो–दानं यस्य सोऽपि ददः ॥ ५३ ॥ देन–दीप्त्या दः–पूजनं यस्य सोऽपि ददः
॥ ५४ ॥ देन–दीप्त्या दः–क्षीणः सोऽपि ददः ॥ ५५ ॥ देन–दीप्त्या उपलक्षितो दो–
दानशौण्डो यस्य सोऽपि ददः ॥ ५६ ॥ देन–दीप्त्या दो–देवो यः सोऽपि ददः ॥ ५७ ॥
अनेनापि भिन्नार्थवाचकेन सप्तपञ्चाशत्प्रमितेन ददपदेन केवलेन नञ्समासपूर्वकेण च
प्रत्येकं पृथक् पृथक् सप्ततिः सप्ततिः ७० अर्थाः कार्याः । ततः सप्तपञ्चाशत् ५७ सप्तत्या
२५ गुणिता जाताः ३९९० ॥ ततः दानार्थवाचकददपदनिष्पन्नसप्तत्यर्थ७०मीलने जाताः
४०६० ॥ एते ४०६० अर्थाः पूर्वोक्त २१४७५ अर्थमीलने जाताः २५५३५ अर्थाः ॥

सु–सुष्ठु च तत् खं च सुखं–प्रधानवितर्कः तस्य सुखस्य समाहारः सौख्यम् ॥ १ ॥
अत्र खशब्दो वितर्के। यदुक्तं श्रीविश्वशम्भुना एकाक्षर(नाम)मालायां (श्लो० २४-२५)–

> "(वाच्यलिङ्गः) खशब्दोऽर्के, वितर्के व्योम्नि वेदने ।
> ३० प्रश्ननिन्दानुपक्षेप–सुखशून्येन्द्रिये दिवि ॥ १ ॥
> अवसानेऽपवर्गेऽपि परब्रह्मण्यपीरितः ॥"

---

१ मयोपलब्धासु सर्वासु प्रतिषु २२तमस्यार्थस्य पुनरावृत्तिर्दृश्यते। एवं सति [illegible] कथं [illegible] ?।

इत्यादि । एवमग्रेऽपि यत्र यत्र स्थाने यदर्थवाचकः खशब्दो विलोक्यते तत्र तत्र एतदुक्तं स्मरणीयम् । सु—सुष्ठु च तत् खं—वित् सुखं—प्रधानसंवित् तस्य समाहारोऽपि सौख्यम् ॥ २ ॥ सु—सुष्ठु च तत् खं—प्रश्नः सुखं—प्रधानप्रश्नः—मुक्तिः कथं प्राप्यते? संसारात् कथं छुट्यते? धर्मः केन विधिना आराध्यते? इत्यादिरूपः तस्य समाहारोऽपि सौख्यम् ॥ ३ ॥ सु—सुष्ठु च तत् खं च—निन्दा सुखं—प्रधाननिन्दा—अयं संसारः असारः, एते कषायाः नरकहेतवः, तस्माद् दूरे त्याज्याः इत्यादि तिरस्काररूपेत्यर्थः, तस्य समाहारोऽपि सौख्यम् ॥ ४ ॥ अथवा सु—पूजनं तस्य खं—निन्दा सुखं तस्य समाहारोऽपि सौख्यम् ॥ ४ ॥ सु—सुष्ठु च तत् खं च सुखं—विशिष्टसुखं तस्य समाहारोऽपि सौख्यम् ॥ ५ ॥ सु—सुष्ठु च तत् खं च सुखं—विशिष्टस्वर्गः तस्य समाहारोऽपि सौख्यम् ॥ ६ ॥ सु—सुष्ठु च तत् खं—परब्रह्मसुखं तस्य समाहारोऽपि सौख्यम् ॥ ७ ॥ सु—सुष्ठु च सा ख्या—ज्ञानं सुख्या तस्याः समाहारोऽपि सौख्यम् ॥ ८ ॥ सु—सुष्ठु च खं—मोक्षसुखं तस्य भावोऽपि सौख्यम् ॥ ९ ॥ सुखस्य समाहारो भावो वाऽपि सौख्यम् ॥ १० ॥ अत्र यथापूर्वं सुखवाचिसौख्यशब्देन समं २५५३५ अर्थाः जाताः । तथा च वितर्कसमाहारादिपृथक्पृथगर्थवाचिसौख्यशब्दनवकेनापि समं प्रत्येकं पृथक् पृथक् २५५३५ अर्थाः कार्याः । ततः २५५३५ अर्था दशवारं गुणिता जाताः २५५३५० अर्थाः ॥ यथा—हे अ!—प्राणिन्! हे नोदद! ते—तुभ्यं राजा—नृपतिः सौख्यं प्रधानवितर्कसमाहारं ददातु इत्यादिदिग्मात्रमर्थकरणे अर्थयोजनाऽपि सर्वत्र स्वयमेव विधेया । मया विस्तारभीत्या न सर्वत्र लिख्यते । ततः यथा एते २५५३५० अर्थाः केवलेन सौख्यशब्देन समं जातास्तथा एतावन्त एवार्थाः नञ्समासपूर्वेणापि सौख्यशब्देन समं कार्याः । यथा हे अ!—हे प्राणिन्! हे नोदद! ते—तुभ्यं राजा—नृपतिः असौख्यं—दुःखं ददातु इत्यादिपूर्वोक्तप्रकारेण कार्याः । ततो द्विगुणिता जाताः ५१०७०० अर्थाः । एते एव अर्थाः काकुवचनेन समं द्विगुणिताः सन्तो जाताः सर्वे ॥ १०२१४०० ॥ यथा हे अ!—हे प्राणिन्! हे नोदद! ते—तुभ्यं राजा—नृपतिः सौख्यं ददातु? अपि तु नेत्यर्थः । इत्यादि दिग्मात्रप्रदर्शनप्रकारेण अन्येऽपि अर्थाः कार्याः । अर्थयोजना तु यत्र न कृता भवति तत्र सर्वत्र स्वयं कार्या तदर्थिभिः सद्भिः । मया तु ग्रन्थविस्तरभीत्या न लिखिता ॥ १०२१४०० ॥

अथ पुनः प्रकारान्तरेण शृङ्खलानामप्रश्नोत्तरभेदेन अर्थदर्शनम्—

"कः सन्तापकरो भवेद् विरहिणां? संभूतिरष्ठीवतः
का स्यात्? प्रेरणदानदातृजनयोः सम्बोधनं किं पृथक्? ।
रूपं दन्त इति ध्वनेर्वदत भो कीदृक् चतुर्थ्यादिमं?
कः स्यात्याजिनरेश्वरस्य विजयो? विष्णुप्रिया पृच्छति ॥ १ ॥"

"परब्रह्मार्थिभक्तानां, कीदृक् किं ददते प्रभुः ? ।
राजन्वत्यः प्रजाः प्राहुः, किं पदं ? वद कोविद ! ॥ २ ॥"

## राजा नो ददते सौख्यम् ॥

### ( राजा जानो ! नोद ! दद ! दते ते असौ सौखी अम् )

५ व्याख्या—विरहिणां जनानां सन्तापकरः को भवेत् ? । उत्तरम्—'राजा' चन्द्रः । अष्ठीवतो—नलकीलस्य संहूतिः का—सम्बोधनं किम् ? । उत्तरम्—हे 'जानो !' । तथा प्रेरणं च दानदातृजनश्च प्रेरणदानदातृजनौ तयोः पृथक् पृथक् सम्बोधनं किम् ? उत्तरम्—हे 'नोद !' हे 'दद !' दं—दानं ददातीति ददस्तत्सं० । दन्त इति ध्वनेः—शब्दस्य चतुर्थ्यादिमं—चतुर्थीविभक्तिप्रथमवचनसत्कं रूपं भो पण्डिताः ! यूयं वदत—कीदृक् स्यात् ? उत्त-
१० रम् 'दते' । विष्णुप्रिया—लक्ष्मीः पृच्छति—न्यायिनरेश्वरस्य विजयः क्व स्यात् ? उत्तरम् । 'ते असौ' खड्गे । प्रभुः—स्वामी कीदृक् सन् परब्रह्मार्थिभक्तानां किं ददते ? उत्तरम्—'सौखी अं' सुखानां समाहारः सौखं सौखमस्यास्तीति सौखी सन् अं—परब्रह्म ददते । हे कोविद ! त्वं वद राजन्वत्यः प्रजाः किं पदं प्राहुः—प्रवदन्ति ? तदा उत्तरम् । राजेति, राजा—नृपो नः—अस्माकं सौख्यं ददते न्यायित्वात् । राजन्वत्य इति शोभनो राजा यासु
१५ ताः राजन्वत्यः, मतौ निपातनात् रूपसिद्धिः । यदाहुः हेमसूरिपादाः—'राजन्वान् सुराज्ञि' ( सिद्ध० अ० २, पा० १, सू० ९८ ) सुराजकेऽर्थे राजन्वान् मतौ निपात्यते । राजन्वान् देशः । राजन्वत्यः प्रजाः इति । इति अर्थद्वयं सर्वमीलने ।

अथ पदोत्तरनामप्रश्नोत्तरभेदेन अर्थदर्शनम्—

कृष्णं का व्रजति प्रमोदवशतः ? का सर्वभक्षा मता ?
२० ध्वस्तं किं हरिणा ? कलत्रवधकस्याहूतिरावेद्यताम् ।
कृष्णः पृच्छति—का च कस्य दयिता ? क्व प्रेम धत्ते शिवा ?
कीदृक् ना भजते च कं सुसुखिनो जल्पन्ति किं प्राणिनः ? ॥ १ ॥

## "राजा नो ददतेऽसौख्यम् ॥"

### ( रा अजा अनः दद ! ते अ ! सा औ खी अम् )

२५ प्रमोदवशात् का स्त्री कृष्णं प्रति याति ? उत्तरम् 'रा' । "रा रमा रमणी बाला" इति ( विश्वशम्भु० श्लो० १०१ ) वचनात् रमा, लक्ष्मीरित्यर्थः । सर्वभक्षा का मता ? उत्तरम् 'अजा' गलस्तनी । हरिणा—नारायणेन किं ध्वस्तम् ? उ० 'अनः' शकटम्, शकटनामा दैत्य इत्यर्थः । कलत्रवधकस्य—स्त्रीखण्डकस्य सम्बोधनं कथ्यताम् । उ० हे 'दद' ! "दं कलत्रं" इति ( सुधा० श्लो० २५ ) वचनात् दं—कलत्रं द्यति—खण्डयतीति
३० ददस्तत्सं० हे दद ! । कृष्णः पृच्छति—का कस्य दयिता ? । उ० हे अ !—हे कृष्ण !

सा-लक्ष्मीः ते-तव। शिवा-पार्वती क-कुत्र प्रेम धत्ते? उ० 'ओ' ईश्वरे। कीदृक् पुमान् कं भजते-सेवते? उ० 'खी अं'। खी-ज्ञानवान्। "अः स्यादर्हति" इति वचनात् जैनमते अं-अर्हन्तं वैष्णवमते अं-कृष्णं वा। सुसुखिनः-अत्यन्तसुखभाजो जनाः किं वदन्ति? उ० 'राजा नो ददतेऽसौख्यम्'। राजा-यमो नः-अस्माकं असौख्यं ददते, अपहरणात्॥ अर्थद्वयम्॥ २॥ ५

अथ पुनः प्रकारान्तरेण अर्थानाह—

( राजाः नोदद ! ते सौख्यम् )

हे नोदद!-हे प्रेरणादायक! ते-तुभ्यं राजाः-सूर्यः अ[ज]ः-ब्रह्मा अः-कृष्णः, ततो द्वन्द्वे कृते राजाः सूर्य-ब्रह्म-कृष्णाः, एते त्रयोऽपि देवाः सौख्यं, ददतामिति शेषः। असौख्यं वा ते-तव ददतां इति शापवचनम्॥ २॥ हे नोदद!-प्रेरणखण्डक! राजा- १० चन्द्रः अः-ईश्वरः आः-स्वयंभूः। ततो द्वन्द्वे कृते राजाः ते-तुभ्यं तव वा सौख्यं असौख्यं वा ददताम्॥ २॥ अर्थयोजना स्वयं कार्या। सर्वे०॥ ४॥ पूर्वद्वयमीलने॥ ६॥ पुनः पूर्वोक्त १०२१४०० मीलने १०२१४०६॥ पुनः पूर्वोक्त १००० सहस्रार्थमीलने जाताः १०२२४०६॥

संवति १६४९प्रमिते श्रावणसुदि १३दिनसन्ध्यायां 'कश्मीर'देशविजयमुद्दिश्य १५ श्रीराजश्रीरामदासवाटिकायां कृतप्रथमप्रयाणेन श्रीअकब्बरपातिसाहिना जलाल(लुद्दी)-दीनेन अभिजातसाहिजातश्रीसिलेमसुरत्राणसामन्तमण्डलिकराजराजिविराजितराजसभायां अनेकविधवैयाकरणतार्किकविद्वत्तमभट्टसमक्षं असद्गुरुवरान् युगप्रधानखरतरभट्टारक-श्रीजिनचन्द्रसूरीश्वरान् आचार्यश्रीजिनसिंहसूरिप्रमुखकृतमुखसुमुखशिष्यव्रातसपरिक-रान् असमानसन्मानबहुमानदानपूर्वं समाहूय अयमष्टलक्षार्थी ग्रन्थो मत्पार्श्वाद् वाचयां- २० चक्रेऽवक्रेण चेतसा। ततस्तदर्थश्रवणसमुत्पन्नप्रभूतनूतनप्रमोदातिरेकेण सञ्जातचित्तच-मत्कारेण बहुप्रकारेण श्रीसाहिना बहुप्रशंसापूर्वं 'पठतां पाठ्यतां सर्वत्र विस्तार्यतां सिद्धि-रस्तु' इत्युक्त्वा च स्वहस्तेन गृहीत्वा एतत् पुस्तकं मम हस्ते दत्त्वा प्रमाणीकृतोऽयं ग्रन्थः। अतः सोपयोगित्वात् श्रीसाहीनपि समुद्दिश्य अर्थमाह—

राजा[2] नः ददते सौख्यम्॥ २५

रा-पङ्क्तिरथन्यायेन श्रीः तया उपलक्षितः अः-अकारः श्रीअः तथा अजो-ब्रह्मा सोऽपि पर्यायेण कः "को ब्रह्मा" इति (विश्वशम्भु० श्लो २१) उक्तत्वात्। ततः श्रीअपूर्वः कः श्रीअकः। तथा 'अः शिवे केशवे वायौ" इत्यादि श्रीविश्वशम्भु( श्लो० ५ )वचनप्रामा-ण्यात् अः-वायुः, स च पर्यायेण "वो वाते वरुणे रुद्रे" इति सुधाकलश( श्लो० ३९ ) वचनात् वः। ततः पूर्वमीलने श्रीअकवः। "यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्" इति ३०

---

१ अयं पाठः ख-पुस्तके नास्ति। २ रा-अ-अज-अ-आः इति सन्धिविश्लेषे।

(वाग्भटालङ्कारे श्लो० २० ) उक्तत्वात् वकारस्थाने बकारो गण्यः । ततः श्रीअकब: । ततः अः (?) अपरनामा आ–अग्निः, स तु पर्यायेण "रो ध्वनौ। तैक्ष्ण्ये वैश्वानरे कामे" इति ( काव्यकल्पलतायां तृतीयप्रताने चित्रप्रपञ्चे ) श्रीअमरकविवचनात् रः । ततः सर्वमीलने सन्धौ च राजाः–श्रीअकबरः नः–अस्मभ्यं सौख्यं–सुखं ददते । प्रजानामिति
५ शेषः । प्रजानां च सुखदानं न्यायित्वात्, परमकृपापरत्वात्, शुल्कादिमोचनकत्वात्, षड्दर्शनीसन्मानदायकत्वात्, शत्रुञ्जयादिमहातीर्थरक्षाकारकत्वात्, श्रीजैनादिधर्मभक्तत्वात्, सर्वसम्मतत्वाच्च । अत्र श्रीसाहेरेव पद्यबन्धेन स्वकृतैव मया वर्णना लिख्यते—

न्यायो नीवृति सर्वतः प्रकटितः शुल्कं त्वया त्याजितं
तीर्थस्थानवहत्पथाश्च[1] विहिताः षड्दर्शनी प्रा(प्री ?)णिता ।
१० गोरक्षादिकृते अमारिपटहो यद्दापितस्तत्प्रभो !
धर्मात् ते विजयः सदैव समरे लोकेऽपि धर्माज्जयः ॥ १ ॥–शार्दूल०

न्यायो नीवृति रामचन्द्रनृपतेर्दानं च कर्णप्रभोः
श्रीमद्विक्रमभूपतेरुपकृतिः श्रीपाण्डवानां जयः ।
सत्कीर्तिश्च नलस्य शस्तगुण इत्येकैक एवाभवद्
१५ दृश्यन्ते भवति प्रभो ! क्षितितले सर्वेऽपि ते साम्प्रतम् ॥ २ ॥–,,

संसारे यदपूर्वं, वस्तु समस्तं तदस्ति ते द्वारि ।
अकबर ! परं त्वपूर्वो, न्यायो नो दृश्यते क्वापि ॥ ३ ॥–आर्या

दाने देवतरुः परोपकरणे श्रीविक्रमाधीश्वरो
धैर्ये 'मेरु'गिरिस्तथा जलनिधिर्गम्भीरतायां हरिः ।
२० ऐश्वर्ये सुमतौ बृहस्पतिरसौ देशोपमा दृश्यते
नो जीवप्रतिपालने तव भुवि श्रीपातसाहिप्रभो ! ॥ ४ ॥–शार्दूल०

स्वमानरक्षणात् तुष्टो, रत्नराशिरदात् तव ।
त्रयोदश सुरत्नानि, विषं च तव वैरिणाम् ॥ ५ ॥–अनु०

अत्रत्या रक्षिताः सर्वे, साहिनाऽनिमिषास्ततः ।
२५ स्तम्भा (?) न स्थातुमिच्छन्ति, दैत्यभीताः सुरा अपि ॥ ६ ॥"

दत्तं श्रीजिनचन्द्राणां, श्रीअकब्बरसाहिना ।
सप्तभीतिहृते मन्ये, अमारिदिनसप्तकम् ॥ ७ ॥"

अहो साहेरियं शक्ति–र्यद्गुरोरुपदेशतः ।
ददेऽमरपदं येन, स्वेच्छासञ्चारिणामपि ॥ ८ ॥

---

1 'वहत्पथाश्च'(?) इति ख–पाठः ।

इत्यादि। सर्वसम्मीलने जाता अर्थाः १०२२४०७ ॥

अत्र अष्टलक्षेभ्योऽर्थेभ्यो यत् साधिकं लक्षद्वयमधिकं जातमस्ति तत् ये अर्था अष्टलक्षार्थीमध्ये केचन न सम्भवन्ति अर्थयोजनया वा न मिलन्ति तत्र स्थाने स्थाप्यम्। ततोऽष्टलक्षार्थी सम्पूर्णा अविघटा अविसंवादिनी च ज्ञेया। जाताः सर्वे अर्थाः अष्टौ लक्षाः ॥ ८०००००॥

॥ अथ प्रशस्तिः ॥

वर्धमानो जिनो जीयाद्, वर्धमानो गुणव्रजैः।<br>
तीर्थं यदीयमद्यापि, जागर्ति जगतीतले ॥ १ ॥–अनु०

श्रीगौतमाद्या गणधारिवर्या<br>
यच्छन्तु मे वाञ्छितमच्छबुद्धयः।<br>
यद्वाक्यमुक्ताफलदामराम<br>
कुर्वन्ति कण्ठे कृतिनः प्रकामम् ॥ २ ॥–इन्द्रवंशा (?)

श्रीहरिभद्रमुनीन्द्र–प्रमुखा मां पूर्वसूरयः पान्तु।<br>
हृन्मञ्जूषामध्ये, यद्गुणरत्नानि धार्यन्ते ॥ ३ ॥–आर्या

श्रीमद्देवाचार्याः, पूर्वाचार्याः प्रभूतगुणवर्याः।<br>
समभूवन् भवसागर–तारणवरतरणिचरणयुगाः ॥ ४ ॥–आर्या

तस्य पट्टमलञ्चक्रे, नेमिचन्द्राख्यसूरिराट्।<br>
यद्वचोऽमृतपानेन, प्रापुर्निर्जरतां नराः ॥ ५ ॥–अनु०

तदनु द्योतविद्योती, सूरिरुद्योतनोऽभवत्।<br>
उद्यद्विहारविख्यातः, प्रद्योतन इवाद्भुतः ॥ ६ ॥–अनु०

यकः शोधयामास वै सूरिमन्त्रं<br>
गिरीन्द्रार्बुदस्याद्भुते शृङ्गभागे।<br>
विधायाष्टमं सन्नमन्नागनाथ–<br>
स्ततो वर्धमानाभिधः सूरिरासीत् ॥ ७ ॥–भुजङ्गप्रयातम्

श्रीमद्दुर्लभराजराजसदसि 'श्रीपत्तने' पत्तने<br>
वादं श्वेतपटैः प्रभूतकपटैः साकं सदा लम्पटैः।<br>
कृत्वा यः प्रकटीचकार वसतेर्मार्गं मनोहारिणं<br>
सूरिर्भूरिजयो जिनेश्वरगुरुर्जातो जगद्विश्रुतः ॥ ८ ॥–शार्दूल०

---

१ 'सागरतारण' इति ख–पाठः, प्रो. पिटर्सन्रिपोर्टनाम्नि ग्रन्थे चतुर्थविभागे (पृ० ६९) तु 'सागरतरणे वरतरणचर' इति पाठः।

२ 'सन्नतं आगमाथ' इति ख-ग-घ–पाठश्चिन्तनीयः।

'संवेगरङ्गशाला'[1], येन कृता जगति लोकहितहेतुः ।
जातः श्रीजिनचन्द्रः, सूरिस्तत्पट्टसमचन्द्रः ॥ ९ ॥–आर्या

अतिचङ्गनवाङ्गीवृत्तिकार! खरतरगणनायक! सुगुणधा(धी?)र!
यशसा युत! जय चिरमभयदेवसूरीश्वर! सुरकृतचरणसेव! १०–आर्यागीतिः

कृत्वा समीपेऽभयदेवसूरे–
येनोपसम्पद्ग्रहणं प्रमोदात् ।
पपे रहस्यामृतमागमानां
सूरिस्ततः श्रीजिनवल्लभोऽभूत् ॥ ११ ॥–उपजातिः

जिग्यिरे येन योगिन्य–श्चतुःषष्टिर्यतीन्दुना ।
सूरिः श्रीजिनदत्तोऽभूत्, तत्पदाम्बुजभास्करः ॥ १२ ॥–अनु०

ततस्तनुभृतां प्रियः समजनिष्ट शिष्टक्रियः
प्रणष्टतिमिरोत्करः सुजिनचन्द्रसूरीश्वरः ।
कवित्वसुममालिको न(व?)रमणीमनोज्ञालिको
नमन्निखिलनायकः प्रबलसौख्यसन्दायकः ॥ १३ ॥–पृथ्वी

जिनपतिसूरिजिनेश्वर–सूरीश्वरजिनप्रबोधजिनचन्द्राः ।
तत्पट्टेऽनुक्रमतो–ऽभूवन् भूपीठविख्याताः ॥ १४ ॥–आर्या

यस्यादेशात् 'खरतर'वसत्याख्यचैत्यं प्रचक्रे
तेजःपालो विपुलविभवोऽपि स्वयं तत्र चैत्ये ।
यः प्रातिष्ठत् त्रिभुवनगुरोः शान्तिनाथस्य बिम्बं
सोऽभूच्छ्रीमज्जिनकुशलराट् सूरिराजीतुराषाट् ॥ १५ ॥–मन्दाक्रान्ता

नव्यानेकविवेकसेकविलसत्क्ष्मापालजम्बालज–
प्रत्यग्रप्रतिबोधबन्धुररविः प्रत्यर्थिभूभृत्पविः ।
यः 'कूर्चालसरस्वती'ति सुतरां ख्यातिं क्षितौ प्रासवान्
स श्रीमज्जिनपद्मसूरिसुगुरुर्जातस्ततस्तारकः ॥ १६ ॥–शार्दूल०

तच्चारुचरणनीरज–चञ्चुरतरचञ्चरीककरणिरभूत् ।
स श्रीमज्जिनलब्धिः, सूरिः सौभाग्यगुणलब्धिः ॥ १७ ॥–आर्या

तदनु विगतच(त?)न्द्राः पश्चिमाम्भोधिमन्द्राः
कुशलकुमुदचन्द्राः प्रत्तभव्याङ्गिभद्राः ।

---

१ मुद्रितोऽस्याः पूर्वार्धः श्रीजिनदत्तसूरिग्रन्थमालायां ( सूर्यपुरे ) ।
२ 'सुर'शब्दो नास्ति ग-घ-प्रत्योः ।

प्रणमदमरचन्द्रा निर्जितश्लोकचन्द्रा
इह भुवि जिनचन्द्राः सूरिराजीसुरेन्द्राः ॥ १८ ॥–मालिनी

यद्दीक्षिताः समभवन् पदिनः सुशिष्याः
श्राद्धाश्च सङ्घपतयोऽर्पितवासयोगात् ।
प्राप्तोदयः प्रवरलब्धिसमृद्धिसिद्धेः ५
पात्रं ततोऽजनि जिनोदयसूरिराजः ॥ १९ ॥–वसन्ततिलका

रेजिरे राजराजास्या, राजराजिनमस्कृताः ।
श्रीजिनराजसूरीन्द्रा, भव्यराजीवभास्कराः ॥ २० ॥–अनु०

श्रीम'ज्जेसलमेरुदुर्ग'नगरे 'जावाल'पुर्यां तथा
श्रीम'द्देवगिरौ' तथा 'अहि'पुरे 'श्रीपत्तने' पत्तने । १०
भाण्डागारमबीभरद् वरतरैर्नानाविधैः पुस्तकैः
स श्रीमज्जिनभद्रसूरिसुगुरुर्भाग्याद्भुतोऽभूद् भुवि ॥ २१ ॥–शार्दूल०

ततः क्रमाच्छ्रीजिनचन्द्रसूरिः, समुद्रसूरिर्जिनहंससूरिः ।
माणिक्यसूरिर्गुणरत्नसूरिर्जातस्ततः सारविचारसूरिः ॥ २२ ॥–उप०

तदीयपदपूर्वाद्रि–प्रकाशनरविप्रभाः । १५
श्रीजिनचन्द्रसूरीन्द्रा, जयन्ति जयिनोऽधुना ॥ २३ ॥–अनु०

येभ्यो मुदाऽदायि युगप्रधान–पदं प्रभुश्रीमदकब्बरेण ।
प्रभूतभाग्योदयसुप्रसिद्धा, जयन्तु ते श्रीजिनचन्द्रसूरयः ॥ २४ ॥–उप० (?)

श्रीसाहिवाक्याद् गुरुभिः प्रमोदाद्, ये वर्यमाचार्यपदे प्रतिष्ठिताः ।
जाग्रद्यशोराशिविराजमाना, जयन्ति ते श्रीजिनसिंहसूरयः ॥ २५ ॥–उप० २०

तच्चारुचरणाम्भोज–चञ्चरीकमनाः सना ।
गणिः सकलचन्द्राख्यो, विख्यातो मुख्यशैक्षकः ॥ २६ ॥–अनु०

तच्छिष्योऽभ्यस्तिवृद्ध्यर्थं, गणिः समयसुन्दरः ।
वाचकः संख्यभाग् वृत्ति–मर्थरत्नावलीमिमाम् ॥ २७ ॥–अनु०

श्रीजिनसिंहमुनीश्वर–वाचकवरसमयराजगणिराजाम् । २५
मद्विधैकगुरूणा–मनुग्रहो मेऽत्र विज्ञेयः ॥ २८ ॥–आर्या

---

१ 'कलित:' इति प्रो–पाठः । २ 'पद्' इति क–पाठः ।

मत्सरेणाहतो मूर्खो-ऽसहमानः परोन्नतिम् ।
सच्छास्त्रं दूषयत्येव, वारिकुम्भमरिष्टवत् ॥ २९ ॥-अनु०

मात्सर्यमुत्सार्य विचार्य सम्यक्
ज्ञात्वा प्रयासं मम दुष्करं च ।
५ कृत्वा प्रसादं कवयो गुणज्ञाः
प्रमाणयन्तु स्फुटमेतदर्थान् ॥ ३० ॥-उप०

यदत्र शास्त्रे मतिमान्द्यदोष-
वशादशुद्धं किमपि स्फुटं स्यात् ।
विशोधयन्तूग्रधियः प्रसह्य
१० तृणं यथा निर्मलसौधकुण्डात् ॥ ३१ ॥-उपेन्द्र०

श्रीविक्रमनृपवर्षात्, समये रसजलधिरागसोम(१६४६)मिते ।
श्रीमल्'लाभ'पुरेऽस्मिन्, वृत्तिरियं पूर्णतां नीता ॥ ३२ ॥-आर्या

अर्थरत्नावली वृत्तिः, कविकण्ठावलम्बिनी ।
वाच्यमाना चिरं नन्द्याद्, यावच्चन्द्रदिवाकरौ ॥ ३३ ॥-अनु०

१५ इति श्रीमत्खरतरगच्छाधिराजश्रीजिनमाणिक्यसूरिपट्टालङ्कारश्रीअकब्बरसाहि-
जलालदी(लुद्दी)नप्रदत्त'युगप्रधान'पदविरुदश्रीश्रीश्रीमज्जिनचन्द्रसूरिशिष्य-
मुख्यपण्डितप्रवरसकलचन्द्रगणिमणिशिष्यवाचकसमयसुन्दर-
गणिविरचिता अर्थरत्नावलीनाम्नी अष्टलक्षार्थी
सम्पूर्णा ॥ श्रीः ॥

---

१ 'काव्ये' इति मो-पाठः ।

श्रीशुभतिलकोपाध्यायविरचितं

# ॥ गायत्रीविवरणम् ॥

ॐ नमः ॥ श्रीजिनाय नमः ॥

चिदात्मदर्शसङ्क्रान्त-लोकालोकविहायसे ।
परिवाग्वर्तिरूपाय, प्रणम्य परमात्मने ॥ १ ॥-अनु० ५
गम्भीरार्थामपि श्रुत्वा, किञ्चिद् गुरुमुखाम्बुजात् ।
परेषामुपयोगाय, 'गायत्रीं' विवृणोम्यहम् ॥ २ ॥-अनु०
इमां ह्यनादिनिधनां, ब्रह्मजीवानुवेदिनः ।
आमनन्ति परे मन्त्रं, मननत्राणयोगतः ॥ ३ ॥-अनु०
गायन्तं त्रायते यस्माद्, गायत्रीति ततः स्मृता । १०
आचारसिद्धावप्यस्या, इत्यन्वर्थ उदाहृतः ॥ ४ ॥-अनु०

मन्त्रश्च स प्रमाणकोटिसण्टङ्कमाटीकते यः सर्वपार्षदो भवति अर्हमित्यादिवदिति सर्वदर्शनाभिप्रायेण गायत्री व्याख्यानायोपक्रम्यते । सा चेयं सूत्रतः—

ॐ भूर्भुवःस्वस्तत् सवितुर्वरेण्यं भर्गोदे वस्यधीमहि धियोऽयो! नः! प्रचोदयात्

अस्य व्याख्या—ॐमिति परमेष्ठिपञ्चकमाह । कथमिति चेदुच्यते-अर्हन्त इत्याद्यक्षरं अः । अशरीरा इति सिद्धास्तदाद्यक्षरं अः । आचार्या इत्याद्यक्षरं आ । उपाध्याया इत्याद्यक्षरं उः । मुनीत्याद्यक्षरं अस्वरम् सन्धिवशात् ओम् । पदैकदेशेऽपि पदसमुदायोपचारादेवमुक्तिः । तदेवासाधारणगुणसम्पदा विशिनष्टि—भूर्भुवःस्वरिति । भूरित्यव्ययं भूर्लोके । भुव इति भूलोके । स्वरिति स्वर्लोके । त्रयाणां द्वन्द्वे भूर्भुवःस्वः । अधस्तिर्यगूर्ध्वरूपं लोकत्रयं तत् तनोति-ज्ञानात्मना व्याप्नोति भूर्भुवःस्वस्तत् । प्रसिद्धा ह्यर्हत्सिद्धानां सर्वद्रव्यपर्याय- २०

---

१ 'पारे वाग्वृत्ति०' इति प्रतिभाति । २ 'मुपकाराय' इति ख-पाठः । ३ 'मनादि' इति ख-पाठः । ४ 'परं' इति क-पाठः । ५ 'गायितं गायितं यस्मात्' इति ख-पाठः । ६ 'स एव प्रमाणकोटिमाटीकते' इति ख-पाठः । ७ 'अर्हमित्यस्य अः । [अ] सिद्धा अकर्मका इति तेषामपि अः । आचार्याणां आ । उपाध्यायानां उः । जातं ओ इति । मुनीनां मकारे ॐ इति । पदै०' इति ख-पाठः ।

८ उक्तं च—

"अरिहंता असरीरा आयरिया उवज्झाया मुणिणो ।
पंचक्खरनिप्पन्नो ॐकारो पंच परमेट्ठी ॥"

९ 'विशेषणतया विशिनष्टि । भूरित्यव्ययं भूवाचकम् । भुव इति पातालल्लोके' इति ख-पाठः ।

विषयेण केवलज्ञानात्मना लोकत्रयव्याप्तिः ज्ञानात्मनोः स्यादभेदात्, शेषत्रयस्यापि श्रद्धान-विषयतया "सव्वगयं सम्मत्तं" इति ( विशेषावश्यके गा० २७५१ ) वचनात् सामान्य-रूपतया ज्ञानाद् वा। अत एव सवितुर्वरेण्यं—सहस्ररश्मेः सकाशात् प्रधानतरं, तदुद्द्योतस्य देशविषयत्वात् प्रस्तुतपञ्चकसम्बन्धिनो भावोद्योतस्य सर्वविषयत्वात्। आहुश्च पूज्याः ( श्रीभद्रबाहुस्वामिनः आवश्यकनिर्युक्तौ लोगस्साधिकारे )—"[3]चंदाइच्चगहाणं" इत्यादि। न चाचार्यादित्रयस्य कैवलिकज्ञानलम्भो नास्तीति वाच्यम्। तेषामपि कैवलिक-ज्ञानोपलब्धानां भावानां सामान्येन ज्ञानसद्भावादित्युक्तं भर्गोदे इति। भर्ग इति ईश्वरः। उरिति ब्रह्मा दयते—पालयति जगदिति दो—विष्णुः 'क्वचिद्' ( सिद्ध० ५-१-१७१ ) इति डे रूपम्। लोके हि जगद् ब्रह्मोत्पादयति रजोगुणाश्रितः, विष्णुः स्थापयति सत्त्व-गुणाश्रितः। ईश्वरः संहरति तामसभावाश्रितः इति। भर्गश्च उश्च दश्चेति भर्गोदः, द्वन्द्वैक-वद्भावात्, तस्मिन्। किंविशिष्टे? 'वसि' वसतीति वस् विचि रूपं तस्मिन् वसि। क्व वसि इत्याह—'अधीमहि' अस्य (—विष्णोः) अपत्यं इः—कामः तस्य मह्यो—भूमयः इमह्यः—कामिन्यस्ता अधिकृत्य अधीमहि—स्त्रीषु तिष्ठमाने, व्यायत्तात्मनीत्याशयः। प्रतीतं चैत-दीश्वर-ब्रह्म-विष्णुषु कामिनीपरवश(क)त्वम्। [6]पार्वत्यनुनयार्थमीश्वरस्य ताण्डवाडम्बर-श्रुतेः। ब्रह्माणमधिकृत्य वेदेऽप्युक्तम्—"प्रजापतिः स्वां दुहितरमकामयत्"। विष्णोस्तु गोपादिवल्लभोपदर्शकतत्तद्वचनश्रवणात्। पठ्यते च—

> "राधा पुनातु जगदच्युतदत्तदृष्टि-
> र्मन्थानकं विदधती दधिरिक्तभाण्डे।
> तस्याः स्तनस्तवकलोलविलोचनालि-
> र्देवोऽपि दोहनधिया वृषभं निरुन्धन्॥"—वसन्त०

---

१ सम्पूर्णा गाथा तच्छाया च यथा—

> "सव्वगयं सम्मत्तं, सुत्ते चरित्ते न पज्जवा सव्वे।
> देसविरइं पडुच्चा, दोण्ह वि पडिसेहणं कुज्जा॥"
> सर्वगतं सम्यक्त्वं श्रुते चरित्रे न पर्यवाः सर्वे।
> देशविरतिं प्रतीत्य द्वयोरपि प्रतिषेधनं कुर्यात्॥

२ 'अत आह' इति ख-पाठः।

३ समग्रा गाथा तच्छाया चैवम्—

> "चंदाइच्चगहाणं, पहा पयासेइ परिमियं खित्तं।
> केवलियनाणलंभो, लोगालोगं पयासेइ॥"
> चन्द्रा-ऽऽदित्यग्रहाणां प्रभा प्रकाशयति परिमितं क्षेत्रम्।
> केवलिकज्ञानलाभो लोकालोकं प्रकाशयति॥

४ 'तमोगुणान्वितः' इति ख-पाठः। ५ 'श्वरादिषु' इति ख-पाठः। ६ 'ईश्वरेण हि कामान्धेन पार्वत्याः पुरो नाट्यं कृतं, ब्रह्मा' इति ख-पाठः।

इत्यादि। शिष्यं प्रति शिक्षामाह–हे नः!–नर! नृशब्दस्यामन्त्रणे रूपम्। सबहुमानं ह्यामन्त्रितः शिष्यः प्रस्तुतार्थश्रवणे उत्साहितो भवति, अतो विशेषणमाह—'धियोऽयो!' इति। 'युक् मिश्र[व]णे' (सिद्ध० धा०) इत्ययं परैरमिश्र[व]णे चेत्यधीयते, अतो यौति–पृथग्भवतीति युः। विचि छान्दसत्वाद् गुणाभावः। न युरयुः तस्यामन्त्रणं हे अयो!–अपृथग्भूत! कस्याः? 'धियः' बुद्धितः। यतः त्वं बुद्धेरपृथग्भूतो बुद्धिमान्–प्रेक्षापूर्वकारी, अतस्त्वं ५ शिष्यसे[1]। तदन्यत्र हि रक्त-द्विष्ट-मूढ-पूर्वव्युद्ग्राहितादावुपदेशानर्हत्वात् अन्धकारनृत्तानुकारी प्रयास इति। पुनर्व्युत्पाद्यस्यैव[2] विशेषणान्तरमाह—'प्रच!' इति। प्रकृष्टं चरतीति प्रचः–प्रकृष्टाचारो मार्गानुसारिप्रवृत्तिरितियावत् 'क्वचिद्' (सिद्ध० ५–१–१७१) इति डे रूपम्। यथा वा प्रचः–हंस इति, प्रकृष्टाचारे ह्युपदेशसाफल्यं, आचारपराङ्मुखाणां शास्त्रसद्भावप्रतिपादने प्रत्युत प्रत्यवायसम्भवात्। किम्? 'उदयात्' उदयं प्राप्तम्। अनन्य- १० सामान्यगुणातिशयसम्पदा प्रतिष्ठितमाराध्यत्वेन परमेष्ठिपञ्चकं कर्तृभूतमिति। अयमिह तात्पर्यार्थः—ईश्वर-ब्रह्म-विष्णुषु उपलक्षणत्वादन्येष्वपि कपिल-सुगतादिषु दैवतेषु मध्ये भो पुरुष! ज्ञानवन्! प्रकृष्टाचार! परमेष्ठिपञ्चकमेव पूर्वदर्शितदिङ्मात्रगुणातिशययोगा[3]दाराध्यतया प्रतिष्ठितम्, अतस्तदेवाराधनीयं, तदेव चोपासनीयं, तदेव शरणतया प्रतिपत्तव्यं, तदाज्ञामृतरस एवास्वादनीयः, तद्व्यतिरिक्ताराध्यान्तरस्यासद्भावात्। भावेऽपि १५ (च) वस्तुतस्तत्त्वानुपपत्तेः, तद्दोषाणां लेशत इहैव निर्णीतत्वात्, तद्व्यवच्छेदेन चाराध्यतायामतिप्रसङ्गः। उक्तं च—[4]

"कामानुषक्तस्य रिपुप्रहारिणः, प्रपञ्चिनोऽनुग्रहशापकारिणः।
सामान्यपुंवर्गसमानधर्मिणो, महत्त्वक्लृप्तौ सकलस्य तद् भवेत्॥"

इति। इह चाधीमहि वसीति विशेषणेन तेषां रागसूचनं, साहचर्याद् द्वेष-मोहावप्यवसेयौ, २० तेषामायुधादिसद्भावात्[5] पूर्वापरव्याहतार्थागमाद्यभिधानाच्च, यदुक्तम्—

"रागोऽङ्गनासङ्गमनानुमेयो, द्वेषो द्विषद्दारणहेतिगम्यः।
मोहः कुवृत्तागमदोषसाध्यः॥"[6]

इत्यादि। आचार्यादीनां न सर्वथा रागादिक्षय इति चेत्? न, तेषामप्याप्तोपदेशेन रागादिक्षयार्थं प्रवृत्तेस्तथाविधरागाद्यसद्भावात् तदत्यन्तक्षयस्य च भावित्वात् भाविनि भूतवदु- २५ पचारात् वीतरागितैवेति, भात्राचार्यादिभिरेवात्राधिकार इति सर्वं समञ्जसम्। इत्यार्हताभिप्रायेण मन्त्रव्याख्या॥

---

१ 'विशेष्यसे' इति ख–पाठः। २ 'पुनः शिष्यस्यैव' इति ख–पाठः। ३ 'त्रेण गुणा' इति ख–पाठः। ४ 'तथाहि–कामा०' इति ख–पाठः। ५ 'विशेषणे द्वेषस्योपलक्षणं आयुधादिसद्भावेन द्वेषस्यापि तेषां सद्भावात्। इति जैनमताभिप्रायेण व्याख्या॥ १॥' इति ख–पाठः। ६ तर्करहस्यदीपिकाऽनुसारेण (पृ० ४५) अवशिष्टं चरणं त्वेवम्—"नो यस्य देवः स स चैवमर्हन्"।

**(ॐ भूर्भुवःस्वस्तत्! सवितुर्वरेण्यं भर्गोदेऽव स्य धीमहिधियो यो! नः प्रचोदयाऽत्!।)**

अथाऽक्षपादाः[स्वं वेदनी(दिनः)?] स्वं देवम्–ईश्वरं प्रणिदधानाः प्रार्थनापुरःसरमेवमभिदधते—ॐ भूर्भुवःस्वरित्यादि। ओमिति सर्वविद्यानामादिबीजं समग्रागमोपनिषद्भूतम्, अशेषविघ्नविघातनिघ्नम्, अखिलदृष्टादृष्टफलसङ्कल्पकल्पद्रुमोपममित्यस्य प्रणिधानस्यादावुपन्यस्तं परममङ्गलम्। न चैतद्व्यतिरिक्तं अन्यत् तत्त्वमस्ति वस्तुत इति। हे भूर्भुवःस्वस्तदिति लोकत्रयव्यापिन्!, आक्षपादानां हि शिवः सर्वगत इति। तथा सवितुः–भास्वतो वरेण्य!–प्रधानतर!, सर्वज्ञत्वात्। वरेण्यं इति अनुनासिकस्तु 'अइउवर्णस्यान्तेऽनुनासिकोऽनीदादेः' (सिद्ध० १–२–४१) इति लक्षणवशात्। यथा—

"सामं साम ध्रुवं तावद्, दधिँ दधि मधुँ मधु।
श्रूयन्ते सुभ्रुवामत्र, न यावन्मधुरा गिरः॥"

विशेष्यमाह—हे भर्ग! उदे! इति। उत्कृष्ट इः–कामो यस्य स उदिः तस्यामन्त्रणं (हे) उदे!। अर्वाचीनावस्थापेक्षया विशेषणमिदम्। प्रार्थनामाह—अव स्य इति क्रियापदद्वयं यथासङ्ख्यमुत्तरपदद्वयेनाभिसम्बध्यते। तत्र अव–रक्ष पालय वर्धयेतियावत्। किमित्याह–धीं–मतिं कर्मपदम्। धीर्बुद्धिः ज्ञानं तत्त्वाधिगम इत्यनर्थान्तरम्। धियः ईः–श्रीः धीः तां, धीयुक्तां वा श्रियम्, ईश्वरतः प्रार्थना ज्ञानस्य "ईश्वरात् ज्ञानमन्विच्छेत्" इति वचनात्। तथा स्य–विनाशय। 'षोंच् अन्तकर्मणि' (सिद्ध० धा०) इत्यस्य रूपम्। किमित्याह–अहिधियः कर्मतापन्नाः। अहिः–सर्पः तस्येव धियः क्रूरताद्याः परापचिकीर्षादिवार्ताः। नः–अस्माकं, बुद्धिं वर्धय क्रूरताद्याः कुबुद्धीश्च विध्वंसयेत्यर्थः। पुनर्विशेषणान्तरमाह–हे यो!–मिश्रित! सम्बद्ध! 'युक् मिश्रणे' (सिद्ध० धा०) इत्यस्य विचि रूपम्। कया इत्याह–'प्रचोदया' 'चुदण् सञ्चोदने' (सिद्ध० धा०) ततः चोदनं चोदः [स]–शृङ्गारभावसूचनं, प्रकृष्टश्चोदो यस्याः सा प्रचोदा अर्थात् पार्वती तया सहेति वाक्यशेषः। अर्वाचीनावस्थापेक्षया, पार्वतीपीनपयोधरप्रणयीत्याकूतम्। परमपदावस्थायां तु प्रचोदया अयो!–अमिश्रित! इति व्याख्येयम्। "षडिन्द्रियाणि षड् विषयाः षड् बुद्धयः सुखं दुःखं शरीरं चेत्येकविंशतिप्रभेदभिन्नस्य दुःखस्यात्यन्तोच्छेदो मोक्षः" इति नैयायिकवचनप्रामाण्यात्। तथा उदे! इति प्राचीनविशेषणमपि। उत्क्रान्त एः–कामादित्युदिस्तस्यामन्त्रणं उदे! इति योज्यम्। तथा अत्! इति विशेषणम्। अत्ति–भक्षयति जगदिति अत् सृष्टिसंहारकत्वात्। उक्तं च (श्रीहारिभद्रीये षड्दर्शनसमुच्चये श्लो० १३)—

---

१ 'अथवाऽक्षः' इति क–पाठः। २ 'समस्तागमानामुपनिषद्भूतम्, अतोऽस्य प्रणिधानं परममङ्गलत्वादादौ उपन्यस्तं न चै०' इति ख–पाठः। ३ 'तत्त्वान्तरं' इति ख–पाठः। ४ 'यथा' इति ग-पाठः। ५ 'वर्णेत्यादिना विशेष्य०' इति ख–पाठः। ६ 'धीमिति कर्म' इति क–पाठः। ७ 'कुबुद्धीर्विनाशय, पुनः०' इति ख–पाठः। ८ 'त्याद्याः' इति ग–पाठः। ९ 'दिति सिद्धिस्तस्या०' इति ख–पाठः।

"अक्षपादमते देवः, सृष्टिसंहारकृत् शिवः ।
विभुर्नित्यैकसर्वज्ञो, नित्यबुद्धिसमाश्रयः ॥"–अनु०

इति नैयायिकाभिप्रायेण मन्त्रव्याख्या ॥ २ ॥

अथ वैशेषिकाभिप्रायेणाप्येवमेव, तैरपि शिवस्य देवतयाऽभ्युपगमात् । नवरं तन्मते परमपदावस्थास्वरूपमेवम्–"बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काररूपाणां ५ नवानां विशेषगुणानामत्यन्तोच्छेदो मोक्षः" इति[1] ॥ ३ ॥

ॐ भूर्भुवःस्वस्तत् ! सवितुर्वरेण्यं भर् गोदेवस्य धीम ! हि धियो यो ! नः प्रचोदयात् ।

अथवा साङ्ख्याः स्वं देवं–कपिलं प्रणिदधाना इदं वदन्ति—हे 'धीम !' धीः–बुद्धिः तां 'माह्(ङ्) मानशब्दयोः' ( सिद्ध० धा० ? ) शब्दयति–प्ररूपयति इति धीमः– १० भगवान् कपिलस्तस्यामन्त्रणम् । ॐ भूर्भुवःस्वस्तदिति पूर्ववत् ।

"अमूर्तश्चेतनो भोगी, नित्यः सर्वगतोऽक्रियः ।
अकर्ता निर्गुणः सूक्ष्म, आत्मा कपिलदर्शने ॥"

इति वचनात् । सवितुर्वरेण्यमित्याक्षपादपक्षवत् । कपिलमेवोपयोगसम्पदा विशेषयति–भर् इति । 'डुभृंग्क् पोषणे च' ( सिद्ध० धा० ) । बिभर्तीति भर्–पोषकः । क्विपि गुणे १५ च रूपम् । कस्येत्याह–'गोदेवस्य' । गोशब्देनात्र खुरककुदसास्नालाङ्गूलविषाणाद्यवयवसम्पन्नः पशुरुच्यते । अनेन च विधेयता लक्ष्यते । ततो गोरिव विधेयानि–वश्यानि देवानि–इन्द्रियाणि यस्य स तथा तस्य, जितेन्द्रियस्येत्यर्थः । न च गोर्विधेयता कवीनां न रूढिः, "गौरिवैति विधेयताम्" इत्यादि लक्ष्यदर्शनात् । धीमेति व्याख्यातमेव । 'हि' स्फुटम् । 'धियो यो!' इति । हे बुद्धितत्त्वात् पृथग्भूत!, प्रकृतिपुरुषविवेकदर्शनात्[2] २० "निवृत्तायां प्रकृतौ पुरुषस्य स्वरूपावस्थानं मोक्षः" इति वचनात्, प्रकृतिवियोगे च बुद्ध्यादीनामपि विगमात्, कारणाभावे कार्याभावात् । धिय इति पदं पुनरावृत्त्या पञ्चम्यन्तं प्रचोदयेत्यनेन सम्बध्यते । ततश्च धियो–बुद्धितत्त्वात् नः–अस्मानपि प्रचोदय–प्रेरय, व्यपनयेत्यर्थः । षष्ठ्यन्तं वा[3] धिय इति । षष्ठी च "कर्मणि शेषजा" यथा–'माषाणामश्नीयात्' । तथा "न केवलं यो महतां विभाषते" इत्यत्र । ततश्च नः–अस्माकमपि धियं प्रकृति- २५ हेतुकां व्यपनयेति भावः । स्वयं मुक्तोऽस्मान् मोचयेतेतियोवत् । 'अत्' इति । अदिति दान्तमव्ययं आश्चर्यार्थम्[4] । तथाच अदिति आश्चर्यरूप ! तत्कारणेऽनिवृत्तत्वात् तस्यामन्त्रणं हे अद् ! । 'विरामे वा' ( सिद्ध० १–३–५१ ) इति दस्य तः । इति साङ्ख्याभिप्रायेः[5] ॥ ४ ॥

---

१ 'वैशेषिकाभिप्रायेण व्याख्या' इत्यधिकः ख–पाठः । २ 'बुद्धितत्त्वं तन्निमीते–सन्द्०' इति ख–पाठः ।
३ 'वा ततो माषाणामश्नीयादित्यादिवत् धियं' इति ख–पाठः । ४ 'भावः' इति ख–पाठः । ५ श्लोकार्धाङ्कोऽयम् ।

अथवा वैष्णवाः स्वं देवं–हरिं प्रणिदधाना इदमुद्गिरन्ति–ॐभूर्भुवःस्वस्तदित्यादि। ओमिति प्राग्वत्। भूर्भुवःस्वस्तदिति लोकत्रये व्यापिन्!

"जले विष्णुः स्थले विष्णु–र्विष्णुः पर्वतमस्तके।
सर्वभूतमयो विष्णु–स्तस्माद् विष्णुमयं जगत्॥ १॥"

५ इति वचनात्। अथवा भूरित्याश्रयो भुवः–पृथिव्याः। स्वस्तदिति "स्वर्गे परे च लोके स्वर्" इत्यमरकोश( श्लो० २८४४ )वचनात् स्वः–परलोकस्तं तनोतीति स्वस्तत्–परलोकहेतुः "गतिमिच्छेज्जनार्दनात्" इति वचनात् भवेत्यध्याहारात् न इत्यग्रे तनपदस्येह सम्बन्धनाद् अस्माकमाराधकानां परलोकः सुखावहो भवेदिति हृदयम्। तथा सवितुर्वरेण्यमिति। सवितुः–जनकात् वरेण्य!–प्रधानतर!, प्रजानामायतिसुखं पालनात् पितुरप्यधिकतरप्रे-
१० मन्नित्यर्थः। अनुनासिकस्तु प्राग्वत्। तथा भर्गोदेवेति। भर्गश्च उश्च तयोरपि देवः, पूज्यत्वात्, बाणाहवादौ पार्वतीपतेः पराजयश्रवणात्, ब्रह्मणस्तु हरेर्नाभिपुण्डरीकजन्मतया प्रसिद्धेः। तथा स्य इति त्यदस्तदर्थस्यामन्त्रणेऽसौ प्रयोगः। ततश्च हे स्य!–हे स! स्मृतिपथप्रविष्टत्वादेवं विशेषणोपन्यासः। "संस्कारप्रबोधसम्भूतमनुभूतार्थविषयं तदित्याकारं संवेदनं स्मरणम्" इति स्मृतिलक्षणात्। अनेन प्रणिधानैकतानता ध्वन्यते, तथा
१५ मतुब्लोपादभेदोपचाराद् वा धियः–पण्डिताः। 'अर्ह मह पूजायां' ( सिद्ध० धा० ) इति धातोः क्विबन्तस्य मह इति रूपम्। महतीति महः–पूजकः, आराधक इतियावत्। धियां महः धीमहः–तथाविधविद्वज्जनपर्युपासकपुरुषस्तस्मिन्नाराधके यका धीः–बुद्धिर्ज्ञानं तस्य अयुः–अपृथग्भूतस्तस्यामन्त्रणं हे अयो!, सद्गुरुसेवातत्पराणां बुद्धिगोचर इत्यर्थः। न ह्यनुपासितसद्गुरूणां लौकायतिकादीनां परमात्मा ज्ञानगोचरतामञ्चति। यो न इत्य-
२० न्तरा अकारप्रश्लेषात् हे अ!–विष्णो! न इति योजितमेव। प्रचोदयादिति प्रकृष्टः चोदः–शृङ्गारभावसूचनं यस्याः सा प्रचोदा, प्रचोदा चासौ या च–लक्ष्मीः प्रचोदया, तां अतति–सातत्येन गच्छति ( इति ) प्रचोदयात्, तस्यामन्त्रणं हे प्रचोदयात्! यद्वा पूर्वं नः इति न योज्यते, सामर्थ्यादेवास्माकमिति प्रतीतेः। ततश्च आनःप्रचोद इति ज्ञेयम्। हे ( अ! हे ) 'अनःप्रचोद!' अनः–शकटं तत् प्रचोदयति–प्रेरयति इति अनःप्र-
२५ चोदस्तस्यामन्त्रणम्। शैशवे हि विष्णुना चरणेन शकटं पर्यस्तमिति श्रुतिः। ततः 'समानानां तेन दीर्घः' ( सिद्ध० १–२–१ ) इति सन्धौ आनःप्रचोदेति भवति। ननु च योपदात् परे आनःप्रचोदपदे यवानःप्रचोद इति भवितव्यं कथमत्र योनःप्रचोदेति? नैवं कातन्त्रे 'पदात् एदोत् परः पदान्ते लोपमकार' इति सूत्रे एदोद्भ्यामिति सिद्धे यत् परग्रहणं तदिष्टार्थं। तेन क्वचिदाकारोऽपि लुप्यते, ततोऽत्राकारलोपात्

---

१ 'येण व्याख्या' इति ख–पाठः। २ 'अथ' इति ख–पाठः। ३ 'एवमाहुः' इति ख–पाठः। ४ 'इत्यादि वचनात्' इति क–पाठः। ५ अतः परं पाठो नास्ति ख–प्रत्याम्, वैष्णवाभिप्रायिणी व्याख्यापरिसमाप्तेः।

सिद्धं योनःप्रचोदेति। न चैवंप्रकाराः प्रयोगा न लभ्यन्त इति वाच्यम्। "बन्धुप्रियां बन्धुजनोऽऽजुहाव" इति (कुमार० स० १, श्लो० २६) महाकवि(कालिदास)प्रयोगदर्शनात्॥ अथवा स्वस्तदिति विशेषणमेव, प्रचोदेति पुनः क्रियापदम्। अन इति कर्मपदं, अन्तरात्मसारथिना प्रवर्तनीयत्वात् अन इवानः–शरीरं तत् प्रचोद। 'चुदण् सञ्चोदने' (सिद्ध० धा०) इत्यस्य चुरादेर्णिचो अनित्यत्वात् तदभावे हौ रूपं, सञ्चोदनं च नोदनमिति, धातुपारायणकृता तथैव व्याख्यानात्, ततश्च प्रचोद–प्रकर्षेण नुद–स्फेटय। नह्यमुग्धकायकलिमनुत्सृज्य क्वचिदपि परमसुखलाभः। उक्तं हि वेदे–"अशरीरं वा व सन्तं प्रियाप्रिये न स्पृशतः। न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति[2]"। इति वैष्णवाभिप्रायः॥ ५॥

(ॐ भूर्भुवः स्वस्तत्! सवितुर्वरेण्यं भर् गोदेवस्य धीम! हि धियोयो नः प्रचोदयाऽत्)

यदि[3] वा सौगताः स्वं देवं–बुद्धं भट्टारकं प्रणिदधाना एवमाहुः–ॐभूर्भुवःस्वरित्यादि। ओमिति प्राग्वत्। हे भूः!–आधार! भुवो–भव्यलोकस्य स्वः–परलोकं तनोति–विस्तारयति प्रज्ञापयतीतियावत् स्वस्तत्। आत्मनाऽस्तित्वेऽपि परलोकाभ्युपगमात् "आत्मा[4] नास्ति पुनर्भवोऽस्ति" इति वचनात्। "आत्मानास्तित्वं च–पञ्चेमानि भिक्षवः! संज्ञामात्रं[5] प्रतिज्ञामात्रं संवृतिमात्रं व्यवहारमात्रम्। कतमानि पञ्च?, अतीताद्धा अनागताद्धा प्रतिसंख्यानिरोधः[6] आकाशं पुद्गलाः" इति बुद्धोक्तिप्रामाण्यात्, अत्र पुद्गल इत्यात्मा, सवितुः–तपनस्य[7] वरेण्य!–प्रधान!, रविबान्धवत्वात् सप्तमस्य बुद्धस्य शाक्यसिंहाभिधानस्य। भर् गोदेवस्येति। बिभर्तीति भर्–पोषकः। कस्येत्याह—'गोदेवस्य' गोभिर्भूतार्थगर्भाभिर्वाग्भिः दीव्यति–स्तौतीति गोदेवस्तस्य। यदि नामासंवेदयताऽपि डिम्भेन भगवते बुद्धाय कल्पितः पांशुमुष्टी राज्यं फलितस्तदा किं नामाश्चर्यं भावसारस्तुतिपराणां मनीषितसिद्धिविधाने। तथा हे 'धीम!' धियं–ज्ञानमेव मिमीते–शब्दयति प्ररूपयतीति धीमः। बहिरर्थाकाराणामविद्यादर्शितत्वादवस्तुत्वेन ज्ञानाद्वैतस्य तन्मते प्रमाणत्वात्। उक्तं च मुनीन्द्रपादोपजीविभिः—

"ग्राह्यग्राहकनिर्मुक्तं, विज्ञानं परमार्थसत्।
नान्योऽनुभाव्यो बुद्ध्याऽस्ति, तस्या नानुभवोऽपरः॥
ग्राह्यग्राहकवैधुर्यात्, स्वयं सैव प्रकाश्यते।
बाह्यो न विद्यते ह्यर्थो, यथा बालैर्विकल्प्यते॥
वासनालुठितं चित्त–मर्थाभासे प्रवर्तते।"

१ प्रेक्ष्यतां चतुर्दशं पृष्ठम्। २ छान्दोग्योपनिषदि (अ० ८, ख० १२) प्रारम्भे उल्लेखोऽयम्, परन्तु तत्र एतद्वाक्यद्वयस्य पूर्वापरीभावः। ३ 'अथ' इति ख–पाठः। ४ 'आत्मनस्तु पुनर्भावो०' इति ख–पाठश्चिन्तनीयः। ५ 'तन्मात्रं' इति ख–पाठः। ६ 'धश्चाकाशं' इति ख–पाठः। ७ 'रवेर्वरेण्य!' इति ग-पाठः। ८ साक्षिरूपेण उदाहृतं पद्यमकमिदं श्रीगुणाकारसूरिभिः षड्दर्शनसमुच्चयटीकायां तर्करहस्यदीपिकाऽभिधायाम्।

इत्यत्र बहु वक्तव्यं, तत् तु ग्रन्थगौरवभयान्नोच्यते, गमनिकामात्रफलत्वात् प्रयासस्य । 'हि' स्फुटम् । हे यो !–पदैकदेशे पदसमुदायोपचारात् हे योगिन् ! "बुद्धे तु भगवान् योगी" इत्यभिधानचिन्तामणिशेष( श्लो० ७९ )वचनात् योगी–बुद्धस्तस्यामन्त्रणम् । अस्माकं धियो–बुद्धीरभिप्रेततत्त्वज्ञानं प्रति चोदय–व्यापारय । 'अत्' इति अतति–सातत्येन गच्छतीत्यत्, गत्यर्थानां ज्ञानार्थत्वात् सर्वज्ञ इत्यर्थः । इति बौद्धाभिप्रायः[1] ॥ ६ ॥

जैमिनीयाः पुनः सर्वज्ञं देवतात्वेन न प्रतिपन्नाः, किन्तु नित्येभ्यो वेदवाक्येभ्य एव तेषां तत्त्वनिश्चयः, साक्षादतीन्द्रियार्थदर्शिनः कस्यचिदपि तन्मते अभावात् । यदुक्तम्—

> "[2]अतीन्द्रियाणामर्थानां, साक्षाद् द्रष्टा न विद्यते ।
> वचनेन हि नित्येन, यः पश्यति स पश्यति ।"

अतस्ते वेदवाक्यप्रामाण्यात् वैश्वानरं गुरुतया पर्युपासते इति तत्प्रणिधानार्थं वेदस्तुतिगर्भं इदं पठन्ति[3]—ॐ भूर्भुवःस्वरित्यादि । तत्र सुखावबोधाय पदविभागः क्रियते—ॐ भूर्भुवःस्वस्तत् । सवितुः । व । रे । आण्यं । भर्गोदे । वस्य । धीमहि । धियः । अयः । नः । प्रचोदयात् ।

अधुना अक्षरार्थः कथ्यते—धियो–बुद्धयो नः–अस्माकं, भवन्त्विति वाक्यशेषः । किम्भूता भवन्तु ? 'अयः' अयन्ति–गच्छन्तीत्ययो–गामिन्यः । क्वेत्याह–'रे' अग्नौ । अग्निशब्देनात्र तदाराधनादि ग्राह्यम् । अतश्चाग्न्याराधनादावसन्मतयः प्रवर्तनशीला भवन्त्वित्ययमर्थः सम्पन्नः । किंविशिष्टे रे ? 'भर्गोदे' अवतीत्यूः–दाहकः । अवतेः श्रीसिद्धहैमधातुपाठे दहनार्थतया पठितत्वात्, भर्गः–ईश्वर ऊः–दाहको यस्यासौ भर्गोः–कामः, यत् कालिदासः ( कुमारसम्भवे स० ३, श्लो० ७२ )—

> "क्रोधं प्रभो ! संहर संहरेति, यावद् गिरः खे मरुतां चरन्ति ।
> तावत् स वह्निर्भवनेत्रजन्मा, भस्मावशेषं मदनं चकार ॥"

तं ददात्याराधकेभ्य इति भर्गोदस्तस्मिन् । अग्नितर्पिणां शास्त्रे सम्पत्सम्प्राप्त्यभिधानात् सम्पदां च कामभोगहेतुत्वात् । तथाच शिवधर्मोत्तरसूत्रम्—

> "पूजया विपुलं राज्य–मग्निकार्येण सम्पदः ।
> तपः पापविशुद्ध्यर्थं, ज्ञानं ध्यानं च मुक्तिदम्" ॥

इति । पुनः [4]किंविशिष्टे ? 'धीमहि' धियः–पण्डिताः महाः–पूजका यस्य स [5]तथा तत्र ।

---

१ 'प्रायेण मन्त्रव्याख्या' इति ख–पाठः । २ श्रीमल्लिषेणसूरिकृतायां स्याद्वादमञ्जर्यां ( पृ० ८७ ) साक्षिरूपेण उल्लिखिते पद्ये पूर्वार्धमिदम्, उत्तरार्धं तु यथा—नित्येभ्यो वेदवाक्येभ्यो यथार्थत्वविनिश्चयः; इदमुत्तरार्धं समस्ति श्रीहारिभद्रीये षड्दर्शनसमुच्चये( अ० ६, श्लो० २ ), परन्तु तत्र पूर्वार्धमेवम्—"तस्मादतीन्द्रियार्थानां साक्षाद् द्रष्टुरभावतः" इति । ३ पद्यपूर्वकोऽयं पाठः क–प्रतौ नास्ति । ४ 'किंभूते' इति ख–पाठः । ५ 'तस्मिन्' इति ख–पाठः ।

किं स्वच्छन्देनासन्मतयः पावकतर्पणादौ प्रवर्तन्ताम्? नेत्याह–प्रचोदयादिति चोदनं चोदया, चोदनेत्यर्थः । 'णिवेत्त्यासश्रन्थघट्टवन्देरनः' ( सिद्ध० ५–३–१११ ) इत्यनेन अनप्राप्तावपि शलिप्रत्ययादिति बाहुलकादः, णेर्लुक्प्रसङ्ग इति चेन्न । णिलुकोऽनित्यत्वात् । तथा च धातुपारायणं–भीष्यादिभ्योऽनापवादे(?) अप्रत्ययेऽपि णेर्लुकि भीषादीनां सिद्धवद् विधानाण्णिलुकोऽनित्यत्वज्ञापनार्थं, तेन "चिन्तया सुप्रकम्पया" इत्यादि सिद्धम् । इति । चोदना च क्रियां प्रति प्रवर्तकं वचनं यथा–"अग्निहोत्रं जुहुयात् स्वर्गकामः" ( तैत्तिरीयसंहितायाम् ) इति । व्याचकार च षड्दर्शनसमुच्चयकारः—

"चो(नो?)दनालक्षणो धर्म–श्चोदना तु क्रियां प्रति ।
प्रवर्तकं वचः प्राहुः, स्वःकामोऽग्निं यथा यजेत् ॥"

इति ( षड्दर्शनसमुच्चये अ० ६, श्लो० ४ ) । प्रकर्षेण चोदयः प्रचोदयोऽस्मिन्नस्तीति । 'अभ्रादिभ्यः' ( सिद्ध० ७–२–४६ ) इति बहुवचनस्याकृतिगणज्ञापनार्थत्वात् अप्रत्यये प्रचोदयो–[1]वेदस्तस्मात्, वेदोपदेशमाश्रित्येत्यर्थः । 'गम्ययपः कर्माधारे' ( सिद्ध० २–२–७४ ) इति पञ्चमी । [2]किंविशिष्टाद् वेदात्? 'सवितुः व' वशब्दस्य "कादम्बखण्डदलितानि व पङ्कजानि" इत्यादिषूपमानार्थस्य रूढत्वादादित्यादिवत्, समस्तार्थसार्थप्रकाशकतया भास्करतुल्यादित्यर्थः । तस्माद् वेदादसन्मतयः अग्न्याराधनादौ प्रवर्तन्ताम् । अत्र यत्तदोर्नित्याभिसम्बन्धाद् यतो विद्यते, किं तत्? 'ॐ' ओमित्यक्षरं, छन्दसामादिभूतत्वात् तस्य । किंविशिष्टम्? 'भूर्भुवःस्वस्तत्' [3]भुवनत्रयव्यापि । न हि किञ्चिदभिधेयसमाविष्टं वस्तु गुरुसम्प्रदाययुक्त्याऽन्विष्यमाणं [4]अत्रान्तरे शब्दपर्यायैर्नावाप्यते, सर्वैरपि प्रवादिभिरविगानेनास्य सकलभुवनत्रयकमलाधिगमबीजतयोपवर्णितत्वादिति परिभावनीयमेतत् । अत एव चास्यासाधारणं विशेष[5]माह–आण्यमिति । आण्यते–उच्चार्यते स्मर्यत इति आण्यं–प्रणिधेयम् । कस्येत्याह–'वस्य' उः–ब्रह्मा, उः–शङ्करश्च, अः–[6]कृष्णः । सन्धिवशात् वं–पुरुषत्रयं तस्यापि ध्येयमिति भावः । वस्येति कर्तरि षष्ठी 'कृत्यस्य वा' ( सिद्ध० २–२–८८ ) इति लक्षणात् । यद्वा वेदात् । किंविशिष्टात्? सवितुः–उत्पादयितुः, प्रतिपादयितुरितियावत् । किं तदिति व्याप्यमाह–ओमित्यादि । शेषं पूर्ववत् । नवरं वशब्दो वाक्यालङ्कारे ज्ञेयः । [7]रे आण्यमित्याकारलोपः प्राक्तनवाचोयुक्तेरेवावसेयः । तदयं समुदायार्थः–यस्मिन् वेदे आदावखिलजगत्त्रयव्यापी देवत्रयेणापि प्रणिधेयः प्रणव उद्गीयते यश्च समस्तार्थप्रकाशनैकभास्करस्तस्य वेदस्योपदेशमाश्रित्य कामसम्पत्कारणे विद्वज्जनाभ्यर्चनीये चाग्न्याराधने आस्माकीना बुद्धयः [8]प्रवर्तनशीलाः सन्तु । इति भट्टदर्शनाभिप्रायेण व्याख्या ॥ ७ ॥

---

१ 'देवस्तस्मात् देवापदेशः' इति ख–पाठः । २ 'वेति उपमार्थं सवितुः सर्वार्थप्रकाशकत्वेन सूर्यसमानात् तस्माद्.' इति ख–पाठः । ३ 'लोकत्रयव्यापि । तर्हि किञ्चि०' इति ख–पाठः । ४ 'मन्त्रोकारशब्दस्य पर्यायो नैवाप्यते सर्वैरपि प्रवादिभिरप्यविगाने नास्य०' इति ख–पाठः । ५ 'षान्तरमाह' इति ख–पाठः ६ 'पुरुषोत्तमः' इति ख–पाठः । ७ 'वः तस्य वस्य तेनापि ध्येयमित्यर्थः रे आण्यमित्या' इति ख–पाठः । ८ 'प्रवर्तन्तामिति भट्टदर्शनेन मन्त्रव्याख्या' इति ख–पाठः ।

**अथवा सामान्येन सर्वप्रवादिसंवादिस्वरूपस्य परमात्मनः प्रणिधानमिदम्–ॐ भूर्भुवःस्वस्तदित्यादि।** ओमिति प्राग्वत्। भूर्भुवःस्वस्तदिति हे सर्वव्यापिन्!। वेदेऽप्युक्तम्–"पुरुष एवेदं" इत्यादि। सवितुर्वरेण्यमित्यत्रानुनासिकश्लोकनीत्या। भर्गोदेवेति भर्गश्च उश्च उश्च तेषामपि देव आराध्यः। न च वाच्यं तेषामाराध्यो नास्तीति, तेषामपि सन्ध्यावन्दनादिश्रवणात्। तथा—

"पञ्चाशैकोनके कोष्ठे, अकारादिप्रविस्तरे।
तत्र मध्यस्थितं देवि!, शिवं परमकारणम्॥
अष्टवर्गान्तगं बीजं, कवर्गस्य च पूर्वकम्।
वह्निनोपरि संयुक्तं, गगनेन विभूषितम्॥
एतद्देवि! परं तत्त्वं, योऽभिजानाति तत्त्वतः।
संसारबन्धनं छित्त्वा, स याति परमां गतिम्॥"

इत्यादिवचनप्रामाण्यात्। स्य–अन्तय। कमित्याह–'धीम्' धीः–चित्तं तत्र य इः–कामस्तं, मनःकामे हि ध्वंसिते ध्वस्तावेव वाक्कायकामौ, तथा अहिधियः–क्रूरताद्याः ताः अप्यपनय, चं विनाऽपि समुच्चयस्य गम्यमानत्वात्—

"अहरहर् नयमानो, गामश्वं पुरुषं पशुम्।
वैवस्वतो न तृप्यति, सुराया इव दुर्मदी॥"

इत्यादाविव तथासत्त्वम्। तथा योनिं सचित्तादिकां चतुरशीतिलक्षसङ्ख्यावच्छिन्नां वा करोतीति योनयति इति ण्यन्तात् क्विपि णिलुकि च योन्–संसारः तस्मात् योनः–संसारमहोदधेः प्रचोदय–अपनय, अस्मानिति शेषः। कामक्रोधादिभावशत्रुध्वंसनपूर्वमस्मान्मुक्तिं प्रापयेत्यभिप्रायः। प्रचोदयेत्यनेनैव कामादिविध्वंसनमर्थापन्नं मुक्ततायास्तन्नान्तरीयकत्वात् नार्थः 'स्यधीमहि धियः' इत्यनेन चेत्, न, मुक्त्यर्थिना पूर्वं कामादिपराजयो विधेय इत्युपायोपेयभावज्ञापनार्थत्वाददोषः। तथा अत् इति सौगतपक्षवत् साङ्ख्यपक्षवद् वेति सर्वदर्शनाभिप्रायतो मन्त्रव्याख्या॥ ८॥

अथासौ गायत्री सर्वबीजाक्षरनिधिरिति द्विजप्रवादमाश्रित्य कैतिचिन्मन्त्राक्षरबीजानि प्रदर्श्यन्ते, तद्यथा—ओमिति बीजाक्षरमक्षपादपक्षदर्शितप्रभावदिङ्मात्रं च भर्गोदे इत्यनेन ध्यानकार्यापेक्षं वर्णसूचनम्। तथाहि–भर्ग इतीश्वरस्तेन च श्वेतवर्णो लक्ष्यते

---

१ 'अथ सर्वदर्शनसंवादिस्वरूपस्य परमेश्वरस्य' इति ख–पाठः। २ 'परमेश्वरस्य' इति ग-पाठः। ३ 'पूर्ववत्' इति ख–पाठः।' ४ ऋग्वेदे पुरुषसूक्ते। ५ 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति' इति। ६ 'मिति पूर्ववत् भर्गश्च०' इति ख–पाठः। ७ 'गच्छेत्' इति ग-पाठः। ८ 'विनाशय' इति ख–पाठः। ९ 'धीः–बुद्धिः' इति ख–पाठः। १० 'ताद्याः ता अपि विनाशय' इति ख–पाठः। ११ 'पायोविधेयः इत्युपायोपयज्ञापनार्थत्वाददोषः' इति ख–पाठः। १२ 'दर्शनेषु मन्त्रः' इति ख–पाठः। १३ 'कानिचिन्मन्त्राक्षराणि दर्श्यन्ते' इति ख–पाठः।

शान्तिकपौष्टिकादौ। उरिति ब्रह्मा। स च पीतवर्णं ध्वनति स्तम्भादौ पीतरक्तयोः कविरूढ्यैक्यात् रक्तवर्णस्यापि ग्रहणं वश्याकर्षणयोः। द इति कृष्णस्तेन च कृष्णवर्णो गम्यते धूम्रत्वेऽपि साहश्यादेवमुक्तं, वो द्वेषोच्चाटनावसानेषु इत्यादिरन्योऽपि, श्रीमतोऽस्य बीजाक्षरस्य प्रणिधानविधिर्यथाऽऽम्नायमवसेयः॥

यदि वा ओमित्यनेन— 5

"वट्टकला अरिहंता, निउणा सिद्धा य लोटकल सूरी।
उवज्झाय विसुद्धकला, दीहकला साहुणो सुहया"॥

इति (भक्तिभरस्तोत्रगतदशम)गाथोक्तरहस्येन परमेष्ठिपञ्चकमेव महानन्दार्थिना (जनेन) ध्येयमिति॥ अथवा भूरित्यनेन पृथ्वीतत्त्वमुच्यते। भुइत्यनेन भुवनं जलतत्त्वम्। वइत्यनेन वह्नितत्त्वम्। स्वस्तत्सवि इत्यनेन वाय्वाकाशतत्त्वे। तत्र स इत्यनेन समीरणतत्त्वम्। 10
विरित्यनेन वियत्तत्त्वम्। स्वर्-ऊर्ध्वलोकं मुखमस्तकरूपं तनोति-व्याप्नोति इति स्वस्तत्, तच्च तत् सविता चेति समासः।

"तत्त्वपञ्चकमिदं विनियोगात् स्मर्यमाणमघजातिविघाति।
कल्पवृक्ष इव भक्तिपराणां पूरयत्यभिमतानि न कानि?॥"

अथवा रेण्यं धीमहि इति हि हकारे (रे)रेफे च धी इति ईकारे च ण्यं इति बिन्दौ च 15
योजिते (ह्रीँ) मायाबीजं, तदप्यचिन्त्यशक्ति, सर्वमन्त्रेषु सार्वभौमायितत्वात्। इदमेव मायाबीजं मुद्रादिकं (?) महिधियोयोनः इति नात्परस्य विसर्गस्य क्रमाद् योजने नम इति भावात् तदन्तो महामन्त्रः "वर्णान्तः पार्श्वजिनः" इत्यादिवचनप्रामाण्यात्, तथा वरेण्यमिति वस्थाऽकारात् परे रगतैकारे ऐमिति बिन्दौ च वाग्बीजं, ऐं। अधीमहीत्यत्रार्हतपक्षे इः-काम उक्तः, अतस्तद्बीजमपि (स्मरबीजं) खचितसकलीकाररूपं निरूपितम्। तथा वैष्णवपक्षे या 20
इति लक्ष्मीर्व्याख्याता ततस्तेन लक्ष्मीबीजमुपक्षिप्तं रिव(ख)चितश्रीस्वरूपम्। अथवा महि इति हि व्यञ्जनहकारे सवितुरिति सस्वरसकारे ओमित्योंकारे च योजिते हसोम् भवति। ततो वाग्बीजस्मरबीजप्रमुखप्रस्तुताक्षराणां संयोगे श्रीपद्मावती-त्रिपुरादिमहादेवताराधनाः परममन्त्राः सर्वार्थसिद्धिनिबन्धनं भवन्ति विविधानुस्मर्यमाणा इति। तथा स्व इति

---

१ 'कक्षयति' इति ख-पाठः।

२ छाया—

वृत्तकला अर्हन्तो निपुणाः सिद्धाश्च लोट्टकलाः सूरयः।
उपाध्याया विशुद्धकला दीर्घकलाः साधवः सुखदाः॥

३ श्रीमानतुङ्गसूरिकृते भक्तिभरेत्यपरनामके पञ्चपरमेष्ठिस्तवे 'सरणं' इति पाठान्तरम्। ४ 'वाकाशः' इति ख-पाठः। ५ 'इति वायुतत्त्वम्' इति ख-पाठः।

६ 'भगा महासिद्धि' इति ख-पाठः।

स्वराः। भर्ग उरिति ऊकारादूष्माणः। सवितुरिति द्वादशसङ्ख्यासूचनम्। तत ऊष्माणः सवितृस्वरान्तास्तक्षकस्यापि विषोर्मिहृत इति रहस्यम्। महि इति मस्थाकारात् परे हि हकारे रे च ण्यमिति बिन्दौ च योजिते सिद्धचक्रस्यादिबीजं सर्वदेवतानामेकलीलागृहं प्रणवतुल्यफलं सम्पत्सम्पादननिपुणं अर्हमिति बीजाक्षरं सूचितम्। इत्यनया दिशा अन्यदपि विद्वद्भिः ५ स्वप्रज्ञाऽनुसारेण वाच्यम्। "सांयोगिका अमी अर्थाः" इति चोक्तेः, किमाह? सर्वेषामपि मन्त्राक्षराणां संयोगिकत्वात्, संयोगमात्रस्यैव चाभिधेयत्वात्। तथा चाभिधीयते—

"अमन्त्रमक्षरं नास्ति, नास्ति मूलमनौषधम्।
अधना पृथिवी नास्ति, संयोगाः खलु दुर्लभाः॥"

इति। एवं रक्षादियन्त्राण्यपि वाच्यानि। यथा—अत्र मायाबीजमुक्तं तदुपरि यन्त्रन्यासः १० (क्रियते)। तथा वश्यादिभावाः (प्रयोगाः) अपि ज्ञेयाः। यथा भर्गो इति गोशब्दात् गोरोचना महि इति मनःशिला देव इति वा वह्निशिखं अरुगे षट्द (?)मित्यर्थः। प्रचोदयादिति वाहलानि एभिः सवितुरिति विशब्दाद् विशेषको विलेपनं वा। यो इति योशब्दात् योनिमतीनां—स्त्रीणां न इति नशब्दान्नराणां नरेन्द्राणां च प्रियताकरम्। तथा प्रचोदयादिति प्रकारात् प्रदीपनानां विषाणामसाध्यतानिदानमित्यादि। अधीमहीति अकारादजा— १५ मेषशृङ्गी तस्याः प्रचोद इति वा दलानि—पत्राणि भा? भर्गोदेवेति गोशब्दात् गोधूमसक्तवः भा? मदीति मात्—मधु धूलिः भा २ सवितुरिति सात् सर्पिषा सह भर्गो इति भात् भक्षयेत्। वरेण्यमिति वात् बलवीर्यकरं प्रचोद प्रात् प्रभञ्जनहरं इत्याद्यौषधिविधयोऽप्यत्र ज्ञेयाः॥

चक्रे श्रीशुभतिलको—पाध्यायैः स्वमतिशिल्पकल्पनया।
२० व्याख्यानं गायत्र्याः, क्रीडामात्रोपयोगमिदम्॥ १॥

१ अतः परं पुष्पिकां विहाय पाठो नास्ति ख-प्रतौ।

श्रीविवेकसागरविरचितः

# ॥ हरिशब्दार्थगर्भितः श्रीवीतरागस्तवः ॥

इन्द्रे-भा-ऽश्व-शुक-प्लवा-ऽहि-पवन-स्वर्णा-शु-लोकान्तरे[3]-
भारि-अभ्रं[4]-कपी-न्दु-पीत[5]-गरुड-श्री-शुक-विष्णव-ऽर्कजैः[6] ।
[7]सूत-स्कन्द-शनी-श-वंश-वरुण-प्राणा-ऽग्नि-भीता-ऽसितै-
रथैस्त्वां हरिजैः क्रमाज्जिनपते! त्रिंशन्मितैः स्तौम्यहम् ॥ १ ॥–शार्दूल०

भज भक्तिविनम्रनरेशहरिं १ भज कर्ममहीरुहभङ्गहरिम् २ ।
भज सिद्धिपुरीपथपान्थहरिं ३ भज योगिमनःसहकारहरिम् ४ ॥ २ ॥–*पादाकुलकम्
भज वाणिफणिहृ(क्ष)तवादिहरिं ५ भज भीमभवानिलहानिहरिम् ६ ।
भज पापरंजव्रजनाशहरिं ७ भज सौवशरीररुगस्तहरिम् ८ ॥ ३ ॥
भज शोकतटाकतपोऽर्कहरिं ९ भज विद्धिदिताङ्गिसमस्तहरिम् १० ॥
भज दर्पमतङ्गजराजिहरिं ११ भज पारगतं तिमिरौघहरिम् १२ ॥ ४ ॥
भज यन्त्रितपञ्चहृषीकहरिं १३ भज वादिकदम्बककोकहरिम् १४ ॥
भज चम्पकसूनविशेषहरिं १५ भज मारसरीसृपजग्धिहरिम् १६ ॥ ५ ॥
भज दत्तनमज्जननैकहरिं १७ भज लोकदनूद्भवशास्तिहरिम् १८ ॥
भज तं नरकक्षयकारहरिं १९ भज रूपरमापरिभूतहरिम् २० ॥ ६ ॥
भज केवलकाञ्चनसिद्धिहरिं २१ भज हासहिमप्रभशीलहरिम् २२ ।
भज सौख्यविधातृतृतीयहरिं २३ भज मोहविषाभ्यवहारहरिम् २४ ॥ ७ ॥
भज जन्मपवित्रितहारिहरिं २५ भज संयमनीरधिवासहरिम् २६ ।
भज रक्षितसर्वजनौघहरिं २७ भज कर्मसमिद्दहनैकहरिम् २८ ॥ ८ ॥
भज दुस्तरसंसृतिसङ्गहरिं २९ भज नेत्रविकारविनाशहरिम् ३० ।
भज शारदचन्द्रसमानयशोघनसारसुगन्धितभूवलयम् ॥ ९ ॥
जिनवर! परमार्हतस्तवस्ते व्यरचि मया गुरुसोमसुन्दरास्य (?) ।
प्रवितर सुविशालराजराजद्गुणं मम वर्यविवेकसागरं त्वम् ॥ १० ॥

* * * *

१ भेकः । २ रविप्रवृत्तिकरः । ३ भवान्तरम् । ४ सूर्यः । ५ पीतवर्णः । ६ स्वर्वैद्यौ अश्विनीकुमारकौ । ७ पारदः । ८ स्वामिकार्तिकेयः । ९ वागेव फणिनः–सर्पास्तैर्गमिता वादिन एव हरयो–भेका येन । १० अकारान्तोऽपि वर्तते शब्दोऽयम् । ११ इन्द्रियम् । १२ दैत्यः । १३ तृतीयः शनिः सुखकारकोऽस्ति इति रत्नमालायाम् ।

* वृत्तरत्नाकरेऽस्य लक्षणमेवम्—मात्रासमकं नवमाल्गन्तम्, उपचित्रा नवमे परयुक्ते, भद्राभ्यो भाद् गावुपचित्रा आन्काववथान्युधेर्विश्लोकः, लघुगकाद् वानवासिका स्यात्, बाणाष्टनवसु यदि लश्चित्रा । यदतीतकृतवि-विधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् अनियतवृत्तपरिमाणसहितं प्रथितं जगत्सु 'पादाकुलकम्' ॥

# ॥ श्रीऋषभजिनस्तुतिः ॥

## कामक्रीडाच्छन्दोनिबद्धा सारङ्गशब्दार्थसङ्कलिता च ।

(सावचूरिः ।)

[1]श्रीनाभेयं [2]योगिध्येयं [3]देहज्योतिःसारङ्गं (१)
[4]सर्वश्रेयःश्रेयःपद्यागत्यामाद्यत्सारङ्गम् (२) ।
[5]कर्मक्षोणीजन्मश्रोणीश्रेणीध्वंसे सारङ्गं (३)
[6]नौम्युत्कण्ठाव्याप्तस्वान्तः [7]सार्वस्थाम्ना सारङ्गम् (४) ॥ १ ॥

[8]अर्हद्वृन्दं कॢप्तानन्दं [9]चञ्चच्चक्षुःसारङ्गं (५)
[10]विश्वासत्यव्याधादित्यच्छायाभेदैः सारङ्गं (६) ।
[11]क्षामाक्षेमं [12]दक्षक्षोणीकौमुद्यामुत्सारङ्गं (७)
[13]श्रेयोरत्याः कण्ठाश्लेषे स्तोष्ये नन्दत् सारङ्गम् (८) ॥ २ ॥

[14]स्तौम्यध्वान्तं ध्वस्तध्वान्तं श्रीसिद्धान्तं सारङ्गं (९)
[15]भव्याम्भोजेष्वाविर्भूतानन्दाम्भोरुट्सारङ्गम् (१०) ।
[16]अज्ञानालीपाथोदालीशत्या(?) दृप्यत्सारङ्गं (११)
[17]वन्दारूणां भी[18]दारूणां [19]वक्षोवृक्षे सारङ्गम् (१२) ॥ ३ ॥

---

१ श्रीनाभिराजसुतम् । २ साधुध्यानगम्यम् । ३ शरीरकान्तिस्तया सुवर्णोपमम् । ४ सकलकल्याण-समीचीनमार्गगमनविषये बलवत्सारङ्गमिव सारङ्गम्–अश्वम् । ५ कर्माणि अष्टौ तान्येव क्षोणी–पृथिवी जन्तोः–जन्मवतो या श्रोणिर्गुह्याकारा तद्ध्वंसने सारङ्गं–हस्तिनम् । ६ अहं उत्कण्ठाव्याप्तस्वान्तः–हर्ष-पूरितमनाः श्रीनाभेयं जिनम् । ७ स्वकीयबलेन सारङ्गं–सिंहम् । ८ अहं अर्हद्वृन्दं स्तोष्ये–स्तवीमि । कीदृशम् अर्हद्वृन्दं–जिनसमूहं ? कॢप्तानन्दं–सम्पादितहर्षं रचितप्रमोदम् । ९ देदीप्यमाननयनाभ्यां मृग-म् । १० सर्वमृषावादपर्वकालीनसूर्यप्रभाभेदने सारङ्गमिव सारङ्गं–राहुतुल्यम् । ११ कृशीभूतदुरितम् । १२ दक्षाः–प्रवीणास्त एव क्षोणीकौमुद्यः–पृथ्वीचन्द्रज्योत्स्नास्तासां मुदः–हर्षास्तेषां सम्पादने सारङ्गमिव सारङ्गं–चन्द्रम् । १३ माङ्गल्यरत्याः–कल्याणकामस्त्रिया आलिङ्गने नन्दत्–माद्यत् सारङ्गमिव सारङ्गं–कन्दर्पम् । १४ नुवीमि अध्वान्तं–प्रकाशरूपं सिद्धान्तं स्तौमि सारङ्गं–सूर्यम् । १५ भव्यकमलेषु प्रकटीभूतप्रमोदजलरुहपालीषु सारङ्गं–हंसम् । १६ अज्ञानसमूहजलधरश्रेणीहरणविषये दृप्यत्–माद्यत् सारङ्गं–वायुम् । १७ अभिवन्दितणाम् । १८ भयकाष्ठानाम् । १९ पञ्जरवृक्षे सारङ्गं–शुकसदृशम् ।

जैनाध्यक्षं दक्षं यक्षं सुछुच्छायासारङ्गं (१३)
सौव्या वाण्या गाम्भीर्येण ध्वस्तोद्गर्जत्सारङ्गम् (१४)।
अर्हत्सत्पद्वाक्योद्गर्जत्पर्जन्याम्भःसारङ्गं (१५)
वन्दे व्रीडाकामक्रीडाकासारश्रीसारङ्गम् (१६) ॥ ४ ॥
इति श्रीऋषभजिनस्तुतिः कामक्रीडाऽऽख्या। ५

* * * *

श्रीगुणविजयगणिगुम्फितः

# ॥ श्रीमहावीरजिनस्तवः ॥

(सारङ्गशब्दार्थमयः)

चन्द्रा-ऽदित्य-मराल-दन्ति-पवनैः सिंह-क्षमाभृद्-घनैः
वीणा-कम्बु-रमासमुद्भव-रसा-कर्पूर-शर्वा-दकैः। १०
लक्ष्मीकान्त-कुठार-खड्ग-कुसुमैर्दीपा-ऽऽपगा-कार्मुकै-
र्निर्ग्रन्था-ऽलि-पयोरुहा-ऽगुरु-पिकैर्वल्ह्य-ऽश्वे-कार्तस्वरैः ॥१॥—शार्दूल०
रमण-चित्रकै-लोचनै-कज्जलैर्वदन-चित्र-भुजङ्गम-चन्दनैः।
कुल-सुवास-महोदधिनन्दिनी-प्रमदसप्रमदैर्वनिविश्रुतैः ॥ २ ॥—द्रुत०
श्यामा-भेक-रथाङ्ग-रत्न-गरुडैः कीर-प्लवङ्गो-ज्ज्वल- १५
प्रेङ्खद्वर्णनभो-ऽम्बुपैः सुफलवद्द्राक्-सारिका-खञ्जनैः।
वेणी-राग-कुरङ्ग-कुक्कुट-लसद्धंशस्फुरद्वाहनै-
रथैर्वीरविभुं नभोरस(६०)मितैः सारङ्गजैः संस्तुवे ॥ ३ ॥—शार्दूल०
भविककुमुदबोधनसारङ्गं कोविदकोकनयनसारङ्गम्।
सुकृतसरोवरतटसारङ्गं दुष्कृततरुभञ्जनसारङ्गम् ॥ ४ ॥—पादाकुलकम् २०
कुनयरजोहरणे सारङ्गं कितवकरटिदारणसारङ्गम्।
निश्चलतानिर्जितसारङ्गं कुगतिदहनतर्जनसारङ्गम् ॥ ५ ॥
सुस्वरतातर्जितसारङ्गं चारुनिरञ्जनतासारङ्गम्।
सुन्दररूपविजितसारङ्गं सर्वसहनगुणतासारङ्गम् ॥ ६ ॥

---

१ अहं जैनाधिष्ठायकं दक्षं—प्रवीणं यक्षं शोभनकान्त्या प्रवालसदृशम्। २ स्वकीयया वाचा। ३ गम्भीरत्वेन। ४ निराकृतगर्जायमानमेघसदृशम्। ५ जितविस्तारिवचनरूपगर्जारवयुक्तजलधरजलपाने सारङ्गं—चातकम्। ६ लज्जायुतकामकेलितडागलक्ष्मीशोभाकारि सारङ्गं—कमलम्। ७ सर्वगुर्वक्षरमयं कामक्रीडाख्यं पञ्चदशवर्णात्मकं छन्दः ('एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः' इति लक्षणात्मकं लीलाखेलापरनामकम्)।

श्वासपराजितवरसारङ्गं दुर्मदविधिवदने सारङ्गम् ।
दुरितमलापनयनसारङ्गं मन्मथभस्मकरणसारङ्गम् ॥ ७ ॥
कुमतिलतालवने सारङ्गं करपङ्कजसमतासारङ्गम् ।
समवसरणसञ्चितसारङ्गं त्रिभुवनभवनसुभगसारङ्गम् ॥ ८ ॥
५ निर्मलतागङ्गासारङ्गं भ्रूमञ्जुलताजितसारङ्गम् ।
शमरसरत्नाकरसारङ्गं सज्जनमनपङ्कजसारङ्गम् ॥ ९ ॥
अद्भुतपरिमलसुखसारङ्गं देवसमुद्ग्राहितसारङ्गम् ।
कण्ठचमत्कृतकलसारङ्गं दुर्नयविततगहनसारङ्गम् ॥ १० ॥
दमितकरणचञ्चलसारङ्गं मुक्तरजतमणिगणसारङ्गम् ।
१० निर्वृतिमृगनयनसारङ्गं कुमतकुरङ्गहननसारङ्गम् ॥ ११ ॥
त्रिभुवनवर्तिसुजनसारङ्गं सिद्धिवधूलोचनसारङ्गम् ।
शशिसोदरसुन्दरसारङ्गं सौवरमादर्शितसारङ्गम् ॥ १२ ॥
कीलितकोपविषमसारङ्गं वाणीशीतलतासारङ्गम् ।
पावितनिजनिरुपमसारङ्गं मृगमदजैत्रवदनसारङ्गम् ॥ १३ ॥
१५ निजवशनिर्मितमतिसारङ्गं सुरपतिभिर्विनुतं सारङ्गम् ।
विदलितमोहविपुलसारङ्गं देवीकृतवापीसारङ्गम् ॥ १४ ॥
गगनचलितगुरुवृषसारङ्गं ज्ञातकुले निर्जरसारङ्गम् ।
रोषभुजङ्गदमनसारङ्गं ज्ञानमहाभूरुहसारङ्गम् ॥ १५ ॥
स्वीयवशीकृतमनसारङ्गं लेश्यागुणगालितसारङ्गम् ।
२० दानावर्जितभविसारङ्गं निगदितनियतनिपुणसारङ्गम् ॥ १६ ॥
केलिकृते रक्षितसारङ्गं जनरञ्जनलोचनसारङ्गम् ।
लुञ्चितभुजगसदृशसारङ्गं धर्मकथालापितसारङ्गम् ॥ १७ ॥
अङ्गरजोमृगमदसारङ्गं मोहरजनिबोधनसारङ्गम् ।
स्वरमाधुर्यमथितसारङ्गं वीरं भजत सुकृतसारङ्गम् ॥ १८ ॥
२५ इत्थं वीरजिनः स्तुतो नवनवैः सारङ्गशब्दोद्भवैः
सद्भावैः सनयं गुणादिविजयेनानन्दरोमोद्गमम् ।
हर्षोत्कर्षवशेन पेशलतरैर्भावैः सुरैः सन्नत-
श्चित्तप्रीतिकरं परं पदमयं दद्यान्मुदा देहिनाम् ॥ १९ ॥—शार्दूल०

* * * *

१–२ मनसः स्थाने 'मन'प्रयोगश्चिन्तनीयः । ३ 'गुणविजयेन' इत्यर्थः ।

पण्डितश्रीलक्ष्मीकल्लोलगणिकृतं

परागशब्दाष्टोत्तरशतार्थनिबद्धं

# ॥ साधारणजिनस्तवनम् ॥

---

श्रीदेवेन्द्रनरेन्द्रमौलिमुकुटोद्घृष्टांघ्रियुग्मं जिनं
नत्वाऽकुर्मि 'पराग'शब्दविविधार्थोत्पत्तिमालां च याम् । ५
पापं पिण्ढि तदीयपुण्यवशतो यन्मामकीनं विभो !–
ऽभिध्यातीतफलापवर्जनसुधाविष्वाणकारस्करः ॥ १ ॥–शार्दूल०

वक्त्राब्जवायुजितपद्मपरागपूरं
हृन्मन्दिरस्थखपरागहतप्रचारम् ।
प्रोद्दीप्तकाञ्चनपरागसवर्णवर्णं १०
त्वज्ञापरागरसिकः स्तुतिमानये त्वाम् ॥ २ ॥–वसन्त०

देवाऽपराग ! निकृतिप्रततिप्रतान-
च्छेदे कुठार ! सुपरागसमाङ्गगङ्गम् ।
त्वां संश्रयाम्यनिमिषाधिपचापराग–
संसारमुक्त ! भुवि विस्तृतसम्पराग ! ॥ ३ ॥–,, ११

स्वामिन् ! जय त्वमनिशं सपरम्पराऽऽग–
मादिप्रकाशक ! चिरं गतपापराग ! ।
यश्चाप्युवक्थ ऋषिराजिषु पुष्पराग-
वृत्तिं विघट्टितमणीवकचापराग ! ॥ ४ ॥–,,

पूर्वापरस्वरविपर्ययतः पराग ! २०
तत्त्वावबोधमिहिरोद्गमने पराऽग ! ।
त्वं किं परागमयसे मयि मुक्तिदाने
क्लृप्तापरागसि जितारिरथ प्रसीद ॥ ५ ॥–,,

तृष्णापरागविरतं निरतं क्रियायां
लीलापरागतिचरन्तमघं हरन्तम् । १५
विश्वाऽपरागपतिशुभ्रयशोऽभिरामं
वन्दे प्रियंवद ! परागणनीयशीलम् ॥ ६ ॥–,,

---

१ परः–उत्कृष्टः अगः–गिरिः, मेरुरित्यर्थः । २ ऽपगतराग ! । ३ 'पारग !' इत्यर्थः । ४ परैरगण-नीयमाहात्म्यम् ।

भूवाः परागपुरुषेषु कृपां दधानो
मायापरागवनितावधवैनतेयः ।
यः कोपरागरहितस्त्वमसीन ! तेन
सेवे भवन्तमपरागमशैलवज्रम् ॥ ७ ॥–वसन्त०

५

ध्वस्तोपरागपरभागविभूषिताङ्गं
सूरापरागमसमीकृतकर्मधर्मम् ।
पुण्यापरागजनदत्तभवं भजेयं
देवाऽपरागणितलक्षणसञ्चयं त्वाम् ॥ ८ ॥–,,

सेवाऽपरागणितसौख्यकरं श्रयामि
१० हृत्तापरागहरणं करणं गुणानाम् ।
प्रोद्यत्परागतिगतं शरणं जनाना-
मिष्टार्थसाधनसुपर्वपरागकल्पम् ॥ ९ ॥–,,

तेजोविराजितपराङ्गसमीपराग-
द्वेषच्छिदं धनहयद्विपरागहीनम् ।
१५ गेमे(ये) सति द्रुतपराग ! नमस्करोमि
गेस्थे(ये?) जयेऽकलितपापपरागमाशु ॥ १० ॥–,,

गेस्थेजिते जननमृत्युजरापरागं
मां देहि तच्छिवपदं विलसत्परागम् ।
राज्ञेहतस्मरपरागपकोपराग-
२० रिक्तं परागणधरस्थितिकार्यकारिन् ! ॥ ११ ॥–,,

पस्था(?)ङ्गदेवकृतचन्दनसत्परागो
यो द्वापरागमगिरोऽस्ति न जङ्गपूकः ।
गेयं विधाय कृतदुष्कृतसम्पराग-
मीडे प्रतीतमपरागमभिख्यया तम् ॥ १२ ॥–,,

२५ गेपाग्रगे जितपुनर्भवभापराग-
रास्थानके तमुदिते भुवने पराग ! ।
गेशे कृते निहतमोहमहापराग !
गेस्थे पणे कुरु सुखं शमधीपराग ! ॥ १३ ॥–,,

---

१ अपरदार्शनिकसिद्धान्तपर्वतभेदने वज्रमिव वज्रम् । २ मोक्षगतिप्राप्तम् । ३ कल्पवृक्षतुल्यम् ।

गेऽर्थेपरागकरणोद्यमिनं नमामि
गेसो स्थिते खलपरागभयप्रमुक्तम् ।
गेऽन्नेकृतेऽर्पितपरागधराधव ! त्वां
पेहे स्थिते शुचिपरागपवित्रकीर्तिम् ॥ १४ ॥–वसन्त०

गेस्थे भवे सकलजन्तुकृतापराग !
गेदे निवर्हितकषायमहत्पराग ! ।
गेशे विधेहि सुखमुज्झितदुष्पराग !
गेवे सति त्रिजगदङ्गिकृपापराग ! ॥ १५ ॥–,, ५

पेसौपरागसमधैर्य ! सुवर्यवीर्य !
पेसे परागशिवभीरुमभिष्टुवे त्वाम् । १०
ये नीकृते धनवधूप्रभुतापराग-
रामोदिते शुचिपरागरदालिकान्ते ! ॥ १६ ॥–,,

रित्रां कृतेनुचितदेहपरागलेप–
रित्रां गते जय परागभवाधिकश्रीः ।
उन्नेति रःसुविहिते जनतापराग- १५
गेधे कृते गलितमोहमदापराग ! ॥ १७ ॥–,,

परांगनायास्तु पवे पराग, सङ्गेन मुक्तं मनसा नतोऽस्मि ।
पेवे कृते देव नमत्पराग !, संत्यक्तरक्तास्थिपराङ्गसङ्ग ! ॥ १८ ॥–उपजातिः

प्राप्तापरागाधभवाब्धितीरं, वन्दे पराऽगारविमुक्तचिन्तम् ।
तृष्णापरागर्वरुषा निषूदनं, वशापरागार्घ्यगुणोपपन्नम् ॥ १९ ॥–,, २०

दिव्यापरागर्जनतामतीतं, सेवापरागस्त्यमुखर्षिवन्द्यम् ।
परागभस्तिच्छवितोऽधिकप्रभं, परागजाविःकृतसद्गतिं श्रये ॥ २० ॥–इन्द्रवंशा

परागतार्थप्रतिपादनात् प्रियं, जनंपराऽ(जनापरा)गर्ह्यवचःपरम्परम् ।
परागलद्दूषणधोरणीद्धं, परागदाधिघ्नमहं नवीमि ॥ २१ ॥–उपेन्द्रवंशा

परागरुत्मत्स्थितिमूर्त्तिसेव्यं, परागरुद्रव्यसुधूपयोग्यम् । २५
परागमाचारविचारणीयं, पराऽगदंकारमहं भजामि ॥ २२ ॥–उपेन्द्रवज्रा

माद्यत्परागम्यपदप्रदान–दक्षं परागर्भगुणं श्रयध्वम् ।
सुरूपरागोत्थविकारतर्जकं, जरापरागत्वरभीतिवर्जितम् ॥ २३ ॥–इन्द्रवंशा

